# THE

# SARASWATI MANIMALA.

## ( NIGHANTU MANIMALA )

OR

# VAIDICA KOSHA.

EDITED AND PUBLISHED BY

VIDYAVACHASPATI PANDITA MADHU-
SOODANA OJHA, COURT PANDITA
TO H. H. THE MAHARAJA
OF JAIPUR.

FIRST EDITION

PRINTED AT

THE "BALCHANDRA PRESS,"
JAIPUR.



1906

PRICE AS. 8

श्रीः ।

# सरस्वतीमणिमाला

## ( निघण्टुमणिमाला

# वैदिककोषः

जयपुरराजसभाप्रधानपण्डितविद्यावाचस्पतिः
श्रीमधुसूदनशर्मणा मैथिलेन विरचितः ।

प्रथमं संस्करणम् ।

सोऽयं

जयपुरे बालचन्द्रयन्त्रालये मुद्रयित्वा
प्रकाशितः ।

शाके १८२८

मूल्यमाणकाष्टकम् ।

श्रीः ।

# भूमिका ।

सुप्रतिपन्नमिदं सर्वैरपि प्रज्ञाचणैर्यद्वेद एव भारतीयानां परं निःश्रेयसकारणम्, असाधारणो गौरवहेतुः, गरीयसी संपच्चेति । स चाद्य सर्वपुरुषार्थहेतुः, कालपर्ययाद्विपर्यस्तमतिभिरस्माभिरत्यर्थमुपेक्षित इत्यपि भावयन्त्येव कालेऽस्मिन् भावुका विपश्चितः । परं चिराद्वेदार्थपरिशीलनपरम्पराया विच्छिन्नत्वेन तदर्थमतितरां प्रयतमानैरपि बहुभिर्नाशानुरूपं फलमुपभुज्यत इति तस्य पुनः प्रचाराय तदर्थबोधनायोपयुज्यमानानामङ्गग्रन्थानां प्रचार इदानीं बहुतरमपेक्ष्यते, अर्थबोधनाय चोपयुज्यमानेष्वपि बह्वङ्गेषु कोश एव प्रथमं सोपानमिति लोकसाम्यादेवावगम्येत विद्वद्वरैः । वेदाङ्गः कोशश्च समाम्नायापरपर्यायो निघण्टुनामातिप्राचीनो भगवद्यास्ककृतनिरुक्ताख्यभाष्यसंवलितः प्रसिद्ध्यत्येव सर्वत्र । परमत्र पठितानां नाम्नां मुक्तकरूपतया

न तानि सौकर्येणाभ्यसितुं पारयन्ति विद्यार्थिनः, न चात्राभ्यसनसौकर्यार्थमुपयुज्यमानः सन्निवेशक्रमोऽपि यथावद् दृश्यते, बहवश्च शब्दा अत्र सन्दिग्धार्थकत्वेनैवोपनिबद्धाः, भाष्यकारेण च भगवता यास्केन सुविचार्य कृतेऽपि तदर्थनिर्णये न ततः सम्यगवगन्तुं पार्यते प्रथमाधिकारिभिः। ताभिरेताभिरनुपपत्तिभिर्जायमानां वेदार्थाधिगमेच्छूनामुत्साहक्षतिमालोक्य तन्निवर्तनाय यथाशक्यमहं प्रावर्तिषि। तत्र देशेऽस्मिंश्चिरात्प्रवृत्तां पद्यमयकोशाभ्यसनपरिपाटीमनुरुध्य पद्यमयेनानेन प्रबन्धेन निघण्टूक्ताः शब्दाः प्रकरणशो विभज्योपनिबद्धाः सन्दिग्धाश्चापि निरुक्तप्रतिपादितार्थेन व्याख्याताः, किं च बहुतरोपयुक्तो दैवतनिरूपणांशोऽपि निरुक्तनिवृत्तः सूक्ष्मरूपेणेह प्रतिपादितः। तदवश्यं सम्यगभ्यस्तोऽयं निबन्धो वेदार्थविज्ञानप्रेप्सूनामत्यर्थमुपकुर्यादिति विश्वसिमः।

अत्र च ग्रन्थे निघण्टुप्रतिपादिता एव शब्दा उपनिबद्धा नातिरिक्ताः। यद्यपि सन्त्येवापरेऽपि बहवः शब्दा वेदेषु श्रूयमाणा ये नोपनिबद्धा भगवता निघण्टुकृता, न

च स्पृष्टा भगवता यास्केनापि; परं नतेऽत्राप्युपनिबद्धाः। तेषामपि तु शब्दानां ब्राह्मणग्रन्थानुसारि निरूपणं चिकीर्षितमस्माभिः; तद्यदि ग्रन्थमिमं पर्यालोच्य प्राज्ञवरा वर्द्धयिष्यन्त्यस्मदुत्साहं तर्ह्यचिरादेवापरेण भागेन निघण्टुष्वनभिहितानामपि शब्दानां कोशं प्रकाशयिष्यामः। अन्ततश्च प्रीयतामेतेन व्यापारेण भगवान् भूतभावनो वेदपुरुष इत्याशासाना यत्नमिमं सफलयितुं विदुषां सापेक्षदृष्टिपातमभ्यर्थयामहे। इति शुभम्।

# वैदिककोषस्य विषयानुक्रमः ।

इति शुभम् ।

ॐ तत्सत् ।

ऋग्यजुःसामभिस्तत्त्वं निर्दिशन् सर्वतः सुखम् ।
प्रवर्तयन् ज्ञानरूपी भगवान् मे प्रसीदतु ॥ १ ॥

वेदमन्त्रस्तुताः सर्वा निर्दिश्यन्तेऽथ देवताः ।
सोमपास्तु त्रयस्त्रिंशत् त्रयस्त्रिंशदसोमपाः ॥ २ ॥

आदित्या वसवो रुद्रा विश्वेदेवगणावपि ।
प्रजापतिवषट्कारौ वाश्विनौ वेति सोमपाः ॥ ३ ॥

प्रयाजाश्चानुयाजाश्चावयाजाश्चेत्यसोमपाः ।
एकादशक्रमेणैते भूमौ मध्ये दिवि स्थिताः ॥ ४ ॥

अथाग्निरिन्द्रवायुश्चादित्यश्चेति प्रधानतः ।
देवतास्तिस्र एवैताः पृथ्वी-मध्य-द्युन्वधिष्ठिताः ॥ ५ ॥

आदित्यस्यादित्या, रुद्रा इन्द्रस्य, वसवोऽग्नेः, ।
अधिदेवा अथ मरुतो देवविशो रुद्रपुत्राश्च ॥ ६ ॥

अथवेन्द्रस्य तु मरुतो, रुद्राः सोमस्य, वसवोऽग्नेः ।
आदित्या वरुणस्य तु गणिनः सहवासिनो देवाः ॥ ७ ॥

द्रविणोदा जातवेदा वैश्वानर इमेऽग्नयः ।
पार्थिवा उत्तरत्रापि प्रयोगो दृश्यते क्वचित् ॥ ८ ॥

द्वादश आप्रिय एता, बर्हिर्द्वारस्तनूनपादिध्मः ।
ईल उषासानक्ता, स्वाहाकृतयो नराशंसः ॥ ६ ॥

दैव्या होतारा अपि, तिस्रो देवीर्वनस्पतिस्त्वष्टा ।
एषामभिधेयार्थे मतभेदो दृश्यते विदुषाम् ॥ १० ॥

अथ सत्त्वानि वर्ण्यन्ते पृथिव्यायतनानि हि ।
अश्वः शकुनिमण्डूकावक्षो ग्रावा नरस्तुतिः ॥ ११ ॥

वृषभो द्रुघणो नद्य आप ओषधयः पितुः ।
रात्रि-श्रद्धा-पृथिव्यप्वारण्यान्यग्नायि चेत्यपि ॥ १२ ॥

रथ-दुन्दुभि-हस्तघ्ने-पुधी-पु-ज्या-धनुः-कशाः ।
अभीषु-कवचादीनि युद्धोपकरणानि च ॥ १३ ॥

शुनासीरौ हविर्धाने मुसलोलूखले तथा ।
देवी ऊर्जाहुती, देवी जोष्ट्री, आर्त्नी च रोदसी ॥ १४ ॥

विपाट्शुतुद्र्याविसष्टौ द्वन्द्वान्यन्यानि यान्यपि ।
इति षट्त्रिंशदुक्तानि स्तूयन्ते यानि भूरिशः ॥१.५॥

नद्यो नत्र, सुषोमा चार्जीकीया च वितस्तिका ।
असिक्नी च परुष्णी च शुतुद्री च सरस्वती ॥१.६॥

गङ्गा च यमुना चेति स्तूयन्ते तत्र तत्र हि ।
सिन्धुर्विपाट् वितस्ता च चन्द्रभागा इरावती ॥१.७॥

शतद्रुरिति चैतासामादितो लौकिकाभिधाः ।
अन्त्यास्तिस्रः प्रसिद्धाख्या उक्ता एतास्तु भूगताः ॥१.८॥

## इति भूमिष्ठा देवताः ॥

---

वायुर्वरुणरुद्रेन्द्राः पर्जन्योऽथ बृहस्पतिः ।
वास्तु-क्षेत्र-ब्रह्म-वाचां पतयोऽपांनपाद् यमः ॥१.९॥

कः सरस्वान् विश्वकर्म्मा मित्र—तार्क्ष्यक मन्यवः ।
दधिक्राः सविता त्वष्टा वातोऽग्निरिति मध्यगाः ॥२०॥

श्येन–प्रजापति–सुपर्ण—पुरूरवोऽहि–
विश्वानरा निधन-धातृ-विधातृ-सोमाः ।
एतेऽपि पूर्ववदिहापि च हव्यभाजो
वेनोऽसुनीतिरसून इन्दुरिमे त्वहव्याः ॥ २१ ॥

मरुतो रुद्राः पितरो भृगवोऽङ्गिरसोऽप्यथर्व ऋभवः स्युः ।
अथ च वशिष्ठा आप्त्या एता गणदेवतास्तत्र ॥ २२ ॥

अदितिः सरमा पृथिवी, राकाऽनुमतिः कुहूः सिनीवाली ।
अघ्न्या सरस्वती वाग्, गौरी गौरुर्वशी यमीन्द्राणी ॥ २३ ॥

धेनुरिलोषाः पथ्यास्वस्तिर्वै रोदसी, स्त्रियस्त्वेताः ।
एते सर्वे देवा मध्यस्थाना विनिर्दिष्टाः ॥ २४ ॥

---

## इति अन्तरिक्षस्था देवताः ।

---

अथ देवा द्युस्थानाः, सविता भगसूर्य्यपूषणो विष्णुः ।
विश्वानरोऽथ वरुणः,केशि-वृषाकपि-यमै-कपादसिन्धु २५

दध्यङ्ङथर्वमनवोऽथ सप्तऋषयो वसुश्च नासत्यः ।
दस्रोऽपि त्वष्टोषा वृषाकपायी-सरण्यु-सूर्य्याश्च ॥ २६ ॥

धाता मित्रो वरुणोऽर्य्यमा भगोंऽशुर्विवस्वांश्च ।
इन्द्रश्चादितिपुत्रास्त्वष्टृ सवितृ-पूष-विष्णवोऽप्युक्ताः॥२७॥

सप्तर्षयोऽथ देवा विश्वेदेवाश्च साध्यदेवाश्च ।
द्युस्थानानां संज्ञाः प्राणानां वाथ ऋषीनाम् ॥२८॥

अग्निश्चेन्द्रश्चादित्यरश्मयो वासवाः कथिताः ।
इन्द्राणीवरुणान्यग्नाय्याद्या देवपत्न्यः स्युः ॥ २९ ॥

अग्निर्वरुण आदित्य इन्द्र आदित्यरश्मयः ।
यज्ञः सोमोऽश्विनौ वाचश्चेत्यातिस्तुतयो मताः ॥ ३० ॥

पितरः प्रायशोऽथर्व-ऋभुभृग्वङ्गिरोगणाः ।
आप्त्या नामर्षयस्त्रेधा एकताश्च द्वितास्त्रिताः ॥ ३१ ॥

केशिनः कथिता अग्निर्वायुः सूर्य्य इति त्रयः ।
प्रजापतय उद्दिष्टाः सूर्य्यसंवत्सरादयः ॥ ३२ ॥

भारतीडासरस्वत्यस्तिस्रो देव्य उदाहृताः ।
दिवि भुव्यन्तरिक्षे च क्रमेण निवसन्ति याः ॥ ३३ ॥

## इति दिविष्ठा देवताः ॥

इति दैवतवर्गः १.

---

## दिव्यवर्गः २

### द्यावापृथिव्यौ—

स्वधे पुरन्धी धिषणे रोदसी सदसी मही ।
अही गभीरे गम्भीरे ओण्यौ चम्वावथादिती ॥ १ ॥
अम्भसी नभसी क्षोणी सद्मनी वहुले अपि ।
उर्वी पृथ्वी च रजसी पार्थ्वौ घृतवती अपि ॥ २ ॥
दूरे अन्ते अपारे च बृहती रोधसी अपि ।
नप्त्रौ द्यावापृथिव्योस्तु नामान्येतानि सन्ति हि ॥ ३ ॥

### पृथ्वी—

भूर्भूमिरवनिः पूषा गातुर्गौर्ग्माऽदितिः क्षितिः ।
क्षोणिः क्षामा मही पृथ्वी गौरिला निर्ऋती रिपः ॥ ४ ॥

उर्वी गमा ज्मा क्षमा क्ष्मा क्षा पृथिव्या अभिधा इमाः।

हिरण्यम्—

हेम चन्द्रमयो रुक्मं हिरण्यममृतं मरुत् ॥ ५ ॥
लोहं पेशो जातरूपं कनकं भर्म्म काञ्चनम् ।
कृशनं दत्रमित्येता हिरण्यस्याभिधा मताः ॥ ६ ॥

अन्तरिक्षम्—

वियदम्बरमाकाशं व्योम पुष्करमध्वरम् ।
भूः स्वयम्भूः पृथिव्यापोऽन्तरिक्षं धन्वबर्हिषी ॥ ७ ॥
अध्वा समुद्रः सगरोऽन्तरीक्षस्याभिधा इमाः ।

किरणाः—

खेदा तु किरणा गावो रश्मयोऽभीषवो वनम् ।
गभस्तयो दीधितयः साध्या उस्रा मरीचिपाः ॥ १० ॥
सुपर्णाः सप्तऋषयो मयूखा वसवोंऽशुषु ॥ ११ ॥

दिशः—

हरितः ककुभः काष्ठा आष्ठा व्योमोपरा दिशः।
आता आशा दिशामाख्या एताः प्रायेण भूमनि ॥ ८ ॥

दिनम्—

भानुर्घर्म्मो घृणो घ्रंसो वासरं स्वसराणि च ।
वस्तोर्दिनं दिवा द्युर्द्यौर्धविर्घवि दिवेदिवे ॥ १२॥

उषाः—

अहना द्योतना श्वेत्या वाजिनी वाजिनीवती ।
ओदती भास्वती सुम्नावरी चित्रा मघाऽर्जुनी ॥ १३ ॥
विभावरी सूनरी च सूनृता सूनृतावती ।
सूनृतावर्य्यरूषी स्यादरुषीत्युषसोऽभिधाः ॥ १४ ॥

रात्रिः—

नक्ताऽक्तुः शर्वरी श्यावी शोकी मोकी हिमा रजः ।
पयः पयस्वती यस्त्री तमोऽसिक्नी तमस्वती ॥ १५ ॥
दोपोर्म्योध उधा राम्या घृताची शिरिणा त्तपा ।
यम्या नम्येति नामानि रात्र्या इति विभावय ॥ १६ ॥

मेघः—

अद्रिर्गोत्रो गिरिर्ग्रावा पर्वतोऽश्मा अंजो वलः ।
अभ्रं वलाहको मेघो वराहः शम्बरश्चरुः ॥ १८ ॥

रौहिणो रैवतो वृत्रः फलिगाह्युपरोपलाः ।
वृषन्धिरसुरः कोशश्चमसो दृतिरोदनः ॥ १९ ॥
वलिशानः पुरुभोजा अश्मो मेघाभिधा इमाः ॥ २० ॥

जलम्—

इदं जलं जलाषं वार्वारि तेजः स्वधा वनम् ।
गभीरं गम्भरं शुक्रं कृपीटं गहनं वपुः ॥ २१ ॥
तूयं तोयं शम्बरं सत् पवित्रममृतं घृतम् ।
अभ्वमम्बु हविः पूर्णं सर्वं सर्पिरपोऽक्षितम् ॥ २२ ॥
नामाऽन्नं बर्हिरीमाप इन्दुर्हेम महो महत् ।
स्वःसर्गाः सद्म सदनं सुखं क्षत्रं शुभं यशः ॥ २३ ॥
भविष्यद् भुवनं भूतमृतं सत्यं रयिः पयः ।
रसः सरः सहो व्योम धादुरोजो यहः शवः ॥ २४ ॥
तुग्र्या सतीनं सर्णीकं स्यूतीकं भेषजं क्षपः ।
आवया अक्षरं स्रोतस्तृप्तिर्जाम्यायुधान्यहिः ॥ २५ ॥
मुक्षेम धरुणं जन्म क्षीरं नीरं वुसं विषम् ।
बृबूकं बर्बुरं रेतः पुरीषं पिप्पलं मधु ॥ २६ ॥

कशः कबन्धं सलिलं धस्मन्वदुदकं सिरा ।
चोदः चदम नभोऽम्भोऽर्णो अररिन्दानि जामिवत् ॥ २७ ॥
ऋतस्य योनिर्योनिः कं जलनामानि भावय ।

नदी—

यव्या अवनयः सीराः स्रोत्याः खा धुनयोऽगुवः ॥ २८ ॥
एन्यो रुजाना हरितः सरितो रोहितोऽजिराः ।
स्वादो अर्णा रोधचक्रा ऊर्व्यो वर्ध्यश्च सस्रुतः ॥ २९ ॥
नभन्वा वक्षणा वभ्वः कुल्या अर्णाश्च सिन्धवः ।
हिरण्यवर्णाः पार्वत्य इरावत्यश्च मातरः ॥ ३० ॥
हरस्वत्यस्तरस्वत्यः सरस्वत्यः स्रवन्तिकाः ।
ऊर्जस्वत्यः पयस्वत्यो रोधस्वत्यश्च निम्नगाः ॥ ३१ ॥
भास्वत्यो नद्य इत्येवं नदीनामानि भावयेत् ।

अश्वाः—

अत्यो वाजी हयः सप्तिरुच्चैःश्रवसोऽरुषः ॥ ३२ ॥
दधिक्रावा दधिक्राश्च दौर्गह-व्रध्न-वह्नयः ।
तार्क्ष्यो मांश्चत्व आशुश्च पैद्व एतग्व एतशः ॥ ३३ ॥

अश्वाः सुपर्णा हंसासः श्येनासोऽव्यथयो नरः ।
ह्वार्य्याः पतङ्गा इत्येते सामान्येनाश्ववाचिनः ॥ ३४ ॥

*

पूष्णोऽजाः, सवितुः श्यावाः, विश्वरूपा बृहस्पतेः, ।
अश्विनो रासभद्वन्द्वं, पृषत्यो मरुतामपि, ॥ ३५ ॥
हरी इन्द्रस्य, हरितस्त्वादित्यानामथोपसाम् ।
गावोऽरुण्योऽथ नियुतो वायोर्वह्निस्तु रोहितः ॥ ३६ ॥

## इति दिव्यवर्गः ।

---

## मनुष्यवर्गः २

मनुष्यः—

जगतस्तस्थुषो मर्त्या मर्ता मर्य्या धवा नरः ।
द्रुह्यवस्तुर्वशा व्राता जन्तवः क्षितयो विशः ॥ १ ॥
मनुष्या नहुषः कृष्टिहरिचर्षणयो नरः ।
विवस्वन्तः पञ्चजना यदवः पुरवोऽनवः ॥ २ ॥
आयवः पृतना एते मनुष्यार्थाभिधायकाः ।

मेधावी—

मन्धाता मतयो मनश्चिदुशिजो वेनो विधाता विपः
कीस्तासोऽपि विपन्यवोऽपि मतुथा आकेनिपः केनिपः ।
धीरो विप्रविपश्चितावृभुकवी अदूधातयो वाघता
गृत्सः कण्वमनीषि—वेधस इमे विप्रो नवेदाः समाः ॥३॥

स्तोता—

रेभस्तामुर्नदो नादः सूरि—स्तुप्—कारु—कीरयः ।
छन्दो रुद्रः कृपण्युर्गौर्जरिता स्तोतृवाचकाः ॥ ४ ॥

ऋत्विक्—

भरताः कुरवो वृक्तबर्हिषोऽपि यतस्रुचः ।
ग्रवाधो वाघनो देवयवो मरुत ऋत्विजः ॥ ५ ॥

अध्यक्षः—

अर्य्यो नियुत्वान् राष्ट्री स्युरीश्वरार्था इनः पतिः ।

चौरः—

तकारिकारिपूरिभ्रारिहायास्तायुतस्करौ ॥ ६ ॥

तृपुस्तृक्षा वृको रिह्वा ह्वुराश्चिच्च मलिम्लुचः ।
अघशंसो सुपीवांश्च वनर्गुः स्तेनवाचकाः ॥ ७ ॥

अपत्यम्—

तुक् तोकं तनयस्तोक्म तक्मापत्यं नपात् प्रजा ।
वीजमप्नो गयः शेपो यहुर्जाः सूनुरित्यपि ॥ ८ ॥

## इति मनुष्यवर्गः ॥ ३ ॥

---

## धर्म्मवर्गः ४

महान्—

महिषस्तविषस्तवसो रभसः ककुहो महद् बृहद् बाधन् ।
अभ्वोऽद्भुतं विरप्शी वंहिष्ठो बर्हिषद् विहायाश्च ॥ १ ॥
अभ्वोऽम्भृणो गभीरो माहिन ऋष्वो विवक्षसे तुत्रः ।
उक्षित उरुव्यचा ववक्षिथो यह्व—इत्यमी महति ॥ २ ॥

क्षुद्रः—

क्षुल्लकेऽल्प ऋहन् ह्रस्वः प्रतिष्टा मायुकः कृधु ।
अर्भको वभ्रको दभ्रं निवृष्ण्वस्तृपमः समाः ॥ ३ ॥

बहुः—

उरु पुरु शश्वद् विश्वं परीणसा व्यानशिः कुविरत्सलिलम् ।
तुवि च शतं च सहस्रं भूरि च बहुवाचका एते ॥ ४ ॥

समीपः—

आसात् स्याद्स्तमीके च तुर्वशे तडिदम्बरम् ।
आके उपाके अर्वाके अवमे उपमेऽन्तमम् ॥ ५ ॥
अन्तिकार्था इमे प्रोक्ता अथ दूरार्थकाः परे ।

दूरः—

आरे आके पराके च पराचैश्च परावतः ॥ ६ ॥

पुराणः—

प्रवयाः प्रदिवोऽह्नाय पूर्व्यं प्रत्नं सनेमि च ।

नवीनः—

इदानीं नूतनं नूत्नं नवं नव्यमिदा इति ॥ ७ ॥

अन्तर्हितः—

निण्यं सस्वरपीच्यं च प्रतीच्यं सनुतर्हिरुक् ।
पुराणे पट्, नवीने पट्, निर्णीतान्तर्हितस्य पट् ॥ ८ ॥

सुन्दरः—

अनवद्योऽनभिशस्तः पाकोऽनेद्योऽप्यनिन्द्य उक्थ्योऽपि ।
वयुनमनेमाऽस्रेमा वामस्तुनीथौ प्रशस्यनामानि ॥ ६ ॥

रूपम्—

पेशः पिष्टं वपुरपुर्वर्विर्वर्पोऽमतिर्म्मरुत् ।
प्सरः प्सुरप्सः कृशनमरुपं शिल्पमर्जुनम् ॥ १० ॥
अप्रस्तास्रं च निर्णिक् च रूपनामान्यमूनि हि ।

हस्तौ—

अथ बाहू च भुरिजावभीशू च विनङ्गृसौ ॥ ११ ॥

क्षिपस्ती च गभस्ती च भरित्रे चायती च तौ ।
अप्रवाना च्यवाना च करस्नौ शक्करी करे ॥ १२ ॥

अङ्गुलयः—

अण्व्योऽग्रुवो विशः शर्य्या रशना धीतयो धुरः ।
अथर्य्योऽवनयः कक्ष्या योजनानि विपः क्षिपः ॥ १३ ॥
स्वसारोऽभीशवः शाखा जामयश्च सनाभयः ।
गभस्तयो दीधितयो योक्त्राणि हरितस्तथा ॥ १४ ॥

कर्म—

कर्त्तोः कर्त्वं करन्ती ऋतु-करुण-करः कर्त्तवे कर्तुमप्नः
कृत्वी चक्रत् करिक्रद् व्रत-करण-शची-शक्तयः कर्वरं धीः ।
विष्ट्वी वेषश्च वेपोऽप-इति शिमि-शमी-शक्म शिल्पं च दंसा
नामान्येतानि वेदे कलयति कुशलः कर्म्मणि व्यत्ययाच्च ॥

यज्ञः—

यज्ञो वेनोऽध्वरो मेधो विदथः सवनं मखः ।
इष्टिर्होत्रा देवताता विष्णुरिन्दुः प्रजापतिः ॥ १६ ॥
धर्म्म नार्य्यः पञ्चदश यज्ञनामानि चक्षते

सप्तम्—

सप्ते सप्तमृतं सत्रा श्रदित्थाद्धा वडित्यमी ॥ १७ ॥

वाक्—

श्लोको घोषो गणो वाणः स्वनः शब्दः स्वरः सरः ।
धारा गौरी गौरिला गीर्गान्धर्वी भारती गणा ॥ १८ ॥
गाथा गभीरा गम्भीरा मन्द्रा मन्द्राजनी नना ।
वाशी वाणी च वाणीची सूर्या स्वाहा सरस्वती ॥१९ ॥
नौर्धेनुर्धिषणा धेना मेना मेडिः कशा निवित् ।
होत्रा ऋग् धमनिर्नाडीर्म्मायुकाकुदुपब्दयः ॥ २० ॥
वागनुष्टुप् शची गल्दा वल्गुर्वग्नुर्विपा पविः ।
सुपर्णी वकुरो जिह्वा मही ग्राऽदितिरक्षरम् ॥ २१ ॥
एतानि सप्तपञ्चाशद्वचो नामानि चक्षते ।

प्रज्ञा—

केतुः केतश्चेताश्चित्तं माया शची क्रतुर्वयुनम् ॥ २२ ॥
धीरसुरत्वमीमल्या प्रज्ञानामानि कथ्यन्ते ।

सुखम्----

शिम्बाता शतरा शर्म्म शिवं शेवं च शन्तमम् ॥ २३ ॥
स्योनं सुम्नं शुनं शूपं जलाषं भेषजं मयः ।
सुम्न्यं शग्मं शातपन्ता स्यूमकं सुदिनं तथा ॥ २४ ॥
शिल्गुः शं कामिमे शब्दाः सुखार्था एकविंशतिः ।

बलम्--

ओजः पाजः शवः शर्द्धस्तृक्षं त्वक्षस्तवस्तरः ॥ २५ ॥
शूपं शुष्णं वीडु शुष्मं नृम्णं च्यौत्नं यहः सहः ।
दक्षो वर्गो वधो बाधो वृजिनं वृक् च शम्बरम् ॥ २६ ॥
स्यन्द्रासो द्रविणं पौंस्यं धर्णसिस्तविषी तथा ।
मज्मना बलनामानि पदार्थज्ञाः प्रचक्षते ॥ २७ ॥

क्रोधः---

हरो ह्वरो हृणिर्जूर्णिरेहो हेडो व्यथिस्त्यजः ।
भामो मन्युश्च तपुषी क्रोधनामानि मानय ॥ २८ ॥

वज्रम्---

मेनिर्नेमिर्नमः कुत्सः कुलिशः सायकस्तुजः ।

स्रुको वृको वधो वज्रः स्वधितिः परशुः पविः ॥ २९ ॥
हेतिर्दिद्युत्तिग्ममर्को वज्रनामानि भावय ।

युद्धम्—

विवाग् विखाद्वो नदनुः मथने च महाधने ॥ ३० ॥
पृतनाः पृतनाज्यं च पृक्षे पृत्सु खले खजे ।
स्पृधो मृधो भरे मीद्ळ्हे पौंस्य आक्रन्द आहवे ॥ ३१ ॥
आजावाणौ वाजसातौ शूरसातौ च सद्म च ।
वृत्रतूर्य्ये समर्थ्ये च समोहे च समत्सु च ॥ ३२ ॥
समीथे सङ्कथे सङ्गे सङ्गमे संयुगेऽज्म च ।
समितिः समनं सङ्काः संख्ये संयच्च संवतः ॥ ३३ ॥
समनीके समीके चाभीके समरणे रणः ।
ममसत्यं नेमधिता वाजे सङ्ग्रामवाचकाः ॥ ३४ ॥

धनम्—

रेक्णो रिक्थं मघं वेदो वरिवो बन्धुरिन्द्रियम् ।
श्वात्रं क्षत्रं रयी रत्नं भगो मीळ्हं गयस्तना ॥ ३५ ॥

रायो राधो यशो मेधा भोजनं द्रविणं वसु ।
द्युम्नं नृम्णं वृतं वृत्रं श्रवो ब्रह्म धनार्थकाः ॥ ३६ ॥

गौः—

अघ्न्योस्रियोस्रा जगती शक्करीलादितिर्म्मही ।
अहीति नव नामानि गवामित्यवधारय ॥ ३७ ॥

अन्नम्—

वाजोऽन्धः क्षु सुतः सिनं पितुरवो ब्रह्म स्वधा सूनृता
चन्नार्कः ससमायुरूर्गिषमिरा नेमो नमः क्षुद्रयः ।
पृत्तो धासिरिला यशो रसपयोवर्चःप्रयांसि श्रवः
कीलालं क्षुमदेव सीनमिति वा पाजोऽपि वाऽन्नार्थकाः ३८

गृहम—

अस्तं पस्त्यं नीडं, कृत्तिः कृदरो गयो गर्त्तः ।
दुर्य्याः सद्म दुरोणे, शरणं स्वमराणि योनिरमा ॥ ३९ ॥
छाया छर्दिश्छादिरपि, वर्म्म च हर्म्यं वरूथं च ।
अज्म च शर्म्म दमे गृहनामानि त्रीणि विंशतिश्चेति ॥ ४० ॥

कूपः—

कूपे कर्तः कातुः खातः काटोऽवटोऽवतो वव्रः ।
केवट उत्सः कारोतरः क्रिविः सूद ऋश्यदः कुशयः ॥४१॥

प्रज्वलनम्—

ज्वलतो नामधेयानि शृङ्गं स्यात् कल्मलीकिनम् ।
जञ्जणाभवदित्येवं मल्मलाभवदित्यपि ॥ ४२ ॥
अर्चिः शोचिस्तपस्तेजो हरो हृणिघृणी जमत् ।

शीघ्रः—

क्षिप्रार्थे तुज्यमानासस्तूतुजानो नु तूतुजिः ॥ ४३ ॥
भुरण्युरजिरं जीरा जूर्णिस्तूर्णिः शु साचिवित् ।
आशु प्राशुः शीभमोषं मक्षु शूर्ता तृपु द्रवत् ॥ ४४ ॥
वातरंहाः शूघनासस्तूयं ताजद् भुगद् युगत् ।
अज्रास्तरणिरित्येते—धर्म्मवर्गोऽयमीरितः ॥ ४५ ॥

इति धर्म्मवर्गः ४

# क्रियावर्गः ५

लोठते कसति लोटतेऽयते स्यन्दते स्यमति वर्ततेऽवति ।
स्रंसति स्रवति सर्पतीषति ध्वंसति ध्रजति मार्ष्टि वञ्चति
कालयत्यतति गाति सश्चति श्रोवति भ्रमति पेलयत्यपि
कण्टति स्वरति सश्चते सिसर्त्यार्य्यति ऋयति हर्यतीङ्गते
नक्षति क्षियति सक्षतीषति म्यक्षति त्सरति जेहतेऽर्दति
मर्दति ध्रपति हन्ति जिन्वति ध्राति वाति पवते भुरण्यति
द्राति याति पततीन्वति द्रमत्येजति द्रवति वेति वेनति
प्साति सेधति जिगाति रेजति द्रूलाति ध्रति ऋणोति ऋण्वति
रीयतेऽरुषति सीयते धवत्येति धावति तुरीयतीति च
ऋच्छति व्रजति डीयतेऽनिति च्योदति प्लवति युध्यतीति च
इयर्त्ति ईर्त्ते यतते रथर्यति विपष्टि योपष्टि रिणाति दीयति
इयक्षतिक्षुम्पतिरंहतिक्षिणोत्यृणोतिजङ्गन्तिजगन्तिगन्तिच
पिस्यति,विस्यति,मिस्यति दभ्यति दभ्नोति धन्वति ध्रुवति
मवते प्लवते च्यवते कवते गवते च नवते च ॥ ७ ॥
चतति च चसति च शवति च हनति च वहते मिनाति धमतीति
रजति च लजति च तकति श्वांत्रति नसते मिनोति फणतीति

जवति च जसति च जमति च गमति जगायादगन्नजगन् ।
अयथुः च्वःकति हन्ताद् हयति हयन्तादयागनीगन्ति ॥६॥
ससति सिसूति हम्मति हम्यति दभ्नोति कणति नव्यति च
ऋच्छति राति जगाति द्रुम्मत्याद्या गतिक्रिया बोध्याः॥ १०॥

व्याप्तिः—

आनडाचाण आपानोऽप्यानशे नशदश्नुते ।
नक्षतीन्वसश्चाष्ट दश व्याप्तिक्रिया इमाः ॥ ११ ॥

ईशनम्—

ऐश्वर्य्यार्था राजती रज्यति क्षयति पसते ।

अध्येषणा—

परिस्रव पवस्वाभ्यर्षाशिषोऽध्येषणाक्रियाः ॥ १२ ॥

अर्चा—

अर्चति गायति रेभति नदति पपृक्षा गृणाति गूर्द्धयति ।
वल्गूयति शशमानो जरते रञ्जयति मन्यते मदति ॥ १३ ॥

शंसति रसति पनस्यति पनायते भनति वेनति स्तौति ।
नौति च यौति च रौति च रजयति वाजयति पूजयति॥१४॥
स्वदति स्वरति स्तोभति पृच्छति जल्पति च कल्पते श्रमति
पणते रिहति पणायति सपति कृपायति कृपण्यति ह्वयते ।
मन्त्रयते मन्द्रयते छन्दति च च्छदयते च महयति च ।
एतेऽथ वन्दते चाथ भन्दते चाथ मन्दतेऽर्च्यर्थाः ॥ १६ ॥

परिचर्या—

परिचरणे तु इरज्यति सपति विवासति ऋणद्धि ऋध्नोति॥
ऋच्छति किञ्च सपर्यति विधति नमस्यति दुवस्यति च ॥

याचना—

यन्तारः पीपरत् पूर्द्धि मंदमहि मनामहे ।
मन्महे मायते यामि यन्धीषुध्यति चेमहे ॥ १८ ॥
मिमिड्ढि च मिमीहीति रिरीहीति रिरिड्ढि च ।
दद्धि शग्धीत्यमी शब्दाः श्रूयन्ते याचनक्रियाः ॥ १६ ॥

ईक्षणम्—

चष्टे विचष्टे चिक्यच्च चाकनच्चावचाकशत् ।
विश्वचर्षणिराचक्ष्म विचर्षणिरितीक्षणे ॥ २० ॥

इच्छा—

वष्टि वेति वनोति वेनाति कानिषत् कनतीति च
च्छन्त्सदुश्मासि वश्मि वेशति मन्यते जुषतेऽपि च ।
चाकनच्चकमान आचक एव हर्यति वाञ्छति
व्याहरन्ति हि कान्तिकर्म्मणि कोविदा उशिगित्यपि ॥२१॥

दानम्—

तुञ्जति शिक्षति दाशति दाति च दासति च राति रासति च
अपि च पृणक्ति पृणाति च मंहत एते हि दानकर्म्माणः॥२२॥

भोजनम्—

वन्धां बभस्त्यावयति भसथो वेति भर्वति ।
ह्वरत्यविष्यन् वेवेष्टि वप्सतीत्यत्तिकर्म्मणि ॥ २३ ॥

ज्वलनम्—

भ्राजि-भ्राशी भ्राश्यतिश्च मन्द-भन्द-श्रुति-ज्युति ।
रुक् शोचती दीदयति शुमज्ज्वलतिकर्म्मकाः ॥ २४ ॥

क्रोधनम्—

रोडि-हेडी कम्पि-भोजी भामिभ्रेपति दोधति ।
हृणीयते च भ्रीणाति वनुष्यति क्रुधिक्रियाः ॥ २५ ॥

हननम्—

दभ्नोति धूर्वति वृणक्ति तडिच्छृणाति
दृणाति ताढि नभते धमति स्तृणाति ।
रम्णाति कृणत्ति मिनाति मिनोति शम्ना-
त्याखण्डलार्दयतियातयती वियातः ॥ २६ ॥
स्नथयति तृणेढि वृश्चति
निवपन्तु श्वसिति कृन्तति ध्वरति ।
स्नेहयति वर्हयत्यव-
तिरति स्नेहति नितोशते श्नसति ॥ २७ ॥

श्लथति श्रथति स्फुरति
स्फुलति च निबर्हयति जूर्वति च ।
आतिरदर्दति मर्दति
वधकर्म्माणो बुधैरुदिताः ॥ २८ ॥

शयनम्—

द्वौ तु स्वपितिकर्म्माणौ सस्ति च स्वपितीति च ।
इत्येवं पञ्चदशभिः क्रियावर्गोऽयमीरितः ॥ २९ ॥

## इति क्रियावर्गः ५

---

## उपसर्गवर्गः ६

आ इत्यर्वागर्थे, प्रपरेति प्रातिलोम्यमेतस्य ।
अभिरभिमुखतां, प्रतिरिति तद्विपरीतं समाचष्टे ॥ १ ॥

अतिसू पूजितमर्थं, प्राहतुरनयोर्विपर्य्ययं निर्दुः ।
अवनी विनिग्रहार्थी, वुदिति प्रातिलोमतामनयोः ॥ २ ॥

एकीभावं समिति,व्यपेति तस्माद्विपर्य्ययं ब्रूतः ।
अधिरर्थद्वयमाहोपरिभावं तद्वदैश्वर्य्यम्     ॥ ३ ॥

सादृश्यापरभावं संसर्गोपजन—सर्वतोभावान् ।
क्रमतोऽन्विति चापीति च तद्वदुपेति च परीति च ब्रूते ॥ ४ ॥

इत्युपसर्गा उक्ता विंशतिरेषां क्वचेतरेऽप्यर्थाः ।
अथ च निपाताः केचिद्दर्श्यन्ते ये त्रिधाऽर्थभेदेन ॥ ५ ॥

उपमायामिव, ननु, चिद्, नेति निषेधेऽपि पूर्वतः पठितः ।
पूजावकुत्सयोश्चिद्व्यपदेशानुगृहयोरपि नु     ॥ ६ ॥

अर्थोपसङ्ग्रहार्थाः, समुच्चये चेति आ इति च ।
वेति विचारे चार्थे, विनिग्रहे प्रथमवाक्यगाव्हहौ ॥ ७ ॥

परवाक्यगो विनिग्रह, उ अयं पदपूरणोऽपि स्यात् ।
किल इति विद्यातिशये, न ननुभ्यां संप्रयुक्तमनुपृष्टे॥ ८ ॥

त्वदिति समुच्चयवाची, हीति न्वर्थेऽप्यसूयायाम् ।
मेति निषेधे, खल्विति तत्र च पदपूरणे च स्यात् ॥ ९ ॥

नूनं विचिकित्सायां पदपूर्तौ चाथ शश्वदिति ।
अनुपृष्टे तु पुरस्तादुपरिष्टादस्त्वयंपृष्टे ॥ १० ॥

सीमिति परिग्रहे पदपूर्तौ चेत्येवमितरेऽपि ।
पदपूरणानि तु विदुः कमिद्वीमिति ये च पूर्वनिर्दिष्टाः॥ ११॥

इव ननु चिदु खलु नूनं घ कमित्सीमीमिमानि चान्यानि।
पदपूरणानि, नेदिति परिभयकेऽथानुपृष्टके तु नत्वेत्॥ १२॥

आकीं नकीं नकिर्माकिर्हिकमाहिकमाकृतम् ।
नुकं सुकं नवैतानि व्यर्थान्युक्तिप्रपुष्टये ॥ १३ ॥

अन्ते था, वद्, रूप-वर्ण-भूता, नु-न-चिदा-इव ।
यथा, तथा, लाक्षणिका उपमार्था उदाहृताः ॥ १४ ॥

इत्युपसर्गवर्गः

---

# ऐकपदिकवर्गः ७

अथोच्यन्ते पदान्यत्र द्विशते चाष्टसप्ततिः ।
दमूना मेहना मूषः शिताम जठरं जहा ॥ १ ॥
ईर्मान्तासः कायमानो द्रुपदे विद्रधे निधा ।
शीरं नसन्त नंसन्ते शिप्रे तितउ तुग्वनि ॥ २ ॥
मध्या कुरुतन व्यन्तः परितक्म्याश्मसद् रजः ।
सुविते दयते वाहो मन्दू आहनसो हरः ॥ ३ ॥
इषिरेणोष्मणः काणा अकूपारस्य दावने ।
लोधं वाशी नू च नूचिद्द्विपुणो मन्दिनेऽदितिः ॥ ४ ॥
शिशीते सुतुको जामिः पिता जसुरिरेरिरं ।
शंयोरभायुवोऽस्यास्या गातुस्तृताव दंसयः ॥ ५ ॥
सुभायणा गौऽच्यवनो जरते त्रियुते ऋधक् ।
चयसे जुहुरे चेति द्वाषष्टिपदसंहतिः ( ६२ ) ॥ ६ ॥

*

सस्निमन्धो वावशानो वार्य्यं दूतो वनुष्यति ।
भन्दना आहनः सोमोअत्राः स्वात्रं तरुष्यति ॥ ७ ॥

नद ऊतिर्हासमाने समं पड्भिर्द्धिता पविः ।
वाडिष्ठो वा वराहोऽर्को धन्व वन्नः सचा सिनम् ॥ ८ ॥
पृथुज्रया असश्चन्ती शर्या इत्था चिदाघृणिः ।
द्युम्नं पवित्रमाङ्गूषः काणुका शिपिविष्ट आ ॥ ९ ॥
तोदः स्वश्वाः श्मशा विष्णुरुर्वशी वयुनं वृकः ।
आपान्तमन्युस्तूर्णाशं गधिता गव्यमाशितः ॥ १० ॥
वाजगन्ध्यं वाजपस्त्यं जोषवाकं निचुम्पुणः ।
कौरयाणस्तौरयाणः क्षुम्पं पादुः पदिः परि ॥ ११ ॥
हरयाणोऽप्यहृयाणो निष्षपी तूतुमाकृषे ।
काकुदं केपयोऽसत्रं वीरिटे चर्षणिः स्मणिः ॥ १२ ॥
शम्ब ईं सीमेनमनां समस्याच्छ कुटस्य च ।
अथर्य्यु मध्रिगुः कृत्तिः श्वघ्नी च स्वसराणि च ॥ १३ ॥
ब्रन्दी चेति पदानि स्युरशीतिश्चतुरुत्तरा (८४) ।

*

आशुशुक्षणि राशाभ्यः सललूकमलातृणः ।
कुणारुं कल्पयं काशिनन्त्रदाभं सवीमनि ॥ १४ ॥

ऋदूदर ऋदूप किरस्क्रुधायुरिस्नन्वनी । ।
पुलुकामो भाऋजीको ऋजाना ज़ुर्णरोमना ॥ १५ ॥
उपलप्रक्षिणी पाघः समथाः कपना कृपा ।
त्वदुत्थं मकलविद्गीरुथः गुरुधश्वनः ॥ १६ ॥
शशमानः शाशदानः आयन्तः पचताऽग्रिया ।
त्रिदथानि निनामातुरीत्ते त्तोगाश्य विद्रहः ॥ १७ ॥
अभ्यर्द्धयज्वा दुरितं स्तियानां तुर्वणिः स्तिपाः ।
श्रुष्टी सोमानमोमासोऽमिनोऽमूरः किमीदिने ॥ १८ ॥
स्मः शिप्रे गृशिप्रोऽक्रोऽमूर्तमूर्तेऽमातिष्कुतः ।
सुविद्रत्रः सुदत्रोऽभ्यग् रंसु गिर्वणसेऽमतिः ॥ १९ ॥
आशीरस्मे जारयायि यादृग्मिमनुपक् सुमद् ।
तुञ्जोऽमीवाऽमवानभ्वा ततनुष्टिमिलीविशः ॥ २० ॥
अंहुरो वक्रुरोऽसक्रां रुशदुलवं रिशादसः ।
निशुम्भा अनवायं च कियेधाश्च मनद्रुम् ॥ २१ ॥
गल्दया जल्हवोऽसामि कीकटेषु पराशरः ।
शिरिम्बिठो वेकनाटान् बृंदं बुन्दोऽनवव्रवः ॥ २२ ॥
हिनोतोराणा उपसि दिविष्टिष्वभियेतन ।
जिन्वत्यजीगः कुलिशोऽनर्शरातिं क्रिविर्दती ॥ २३ ॥

तुरीपं रास्पिनोऽमत्र ऋजुनीती ऋचीषमः ।
द्विबर्हा वर्हणा चाकन् जरूथं दूत ऋञ्जतिः ॥२४॥
जवार्वनर्वा चोष्कूयमाणश्चोष्कूयते भृमिः ।
चतः पुरन्धिर्वाताप्यं रथर्यति कन्कूळाति ॥२५॥
सदान्वे जज्झतीदंयुः शरारुर्दन आथवः ।
त्रिष्पितः स्यादृचीसं च पदान्येतानि भावय ॥२६॥
शब्दाः सन्दिग्धसंस्काराः संदिग्धार्था अनेकधा ।
विगृहीता निगमतः संगृह्यते प्रदर्शिताः ॥२७॥

## इति ऐकपदिकवर्गः ॥ ७ ॥

---

# ऐकपदिकार्थवर्गः ८

एषां पदानां यानर्थान् भावयन्ति विपश्चितः ।
तानपीह प्रवक्ष्यामि यथावदनुपूर्वशः ॥ १ ॥
दमूना इष्यते दान्ते यस्य वाभिरुचिर्गृहे ।
यस्य दान्ते मनस्तस्मिंस्तथा दानमनस्यपि ॥ २ ॥
मेहना महनीयेऽर्थे धनादानिष्यतेऽथवा ।
न गृहेऽस्ति ममेत्यर्थे छन्दोगानां पदत्रयम् ॥ ३ ॥
मूषस्तु मूषिकायां स्युः शिताम गुदमुच्यते ।
केचिद्वदन्त्यपि श्यामे वाह्वोरपि यकृत्यपि ॥ ४ ॥
जठरं तूदरे सिद्धं जघानार्थे जह्वापदम् ।
ईर्म्मान्ताः पृथुजङ्घत्वात्सूर्य्याश्वाश्चेरितान्तकाः ॥ ५ ॥
यस्तु कामयमानः स्यात्कायमानः स उच्यते ।
कायमानश्चायमान इत्यप्यन्ये प्रचक्षते ॥ ६ ॥
द्रुपदं पादुकायां स्यान्निगडे वा द्रुमश्रये ।
विद्रधं तु भयात्रस्थे व्यूढे वा विदृढेऽपि वा ॥ ७ ॥
निधा पाशसमूहे स्याच्छीरोऽग्नावनुशायिनि ।
तथैवाशनशीलेऽपि शीरं केचित्प्रचक्षते ॥ ८ ॥

भवेदभिनमन्त्यर्थे नंसन्ते च नसन्त च ।
शिप्रे हनू नासिके वा चालन्यां तितउः स्मृतः ॥ ६ ॥
तुग्व तीर्थं नदीनां स्यात्स्नातुं यत्रावतीर्य्यते ।
मध्या मध्ये कुरुतनेत्यादिषूपजनोऽस्ति नः ॥ १० ॥
ण्यन्तो वधिधातुनिर्वृत्तो गतिभजननादिषु ।
पश्यत्सु गन्तृष्वश्वत्सु ण्यन्त इत्यपि चक्षते ॥ ११ ॥
परितक्म्याऽभितोगन्त्र्यां रात्रौ वा केचिदूहिरे ।
अन्नान्नं तत्र सदनादन्नसत् पाककारिणी ॥ १२ ॥
रजस्तु ज्योतिरल्लोकास्तगहर्वाचकं मतम् ।
सुवितं तु प्रसूते वा प्रजायां वाऽपि सुष्ठुगे ॥ १३ ॥
दः नादानगतित्राणहिंसादाहविभक्तिषु ।
दयते पदमाख्यातं वाहः सोमेऽपि कथ्यते ॥ १४ ॥
वाहः स्तुतौ चर्म्मणि वा सोमाधिपवणात्मके ।
मन्दू मदिष्णू विख्यातावथवापि मदिष्णुना ॥ १५ ॥
आहनाः स्याद्धनवान् हरस्तु रजसा समम् ।
मनस्त्वपेत्तासंपन्नमिषिरं प्रणिधीयते ॥ १६ ॥
इष्म दृष्टिगतीच्छासु तद्योगादिष्मिणो मताः ।

ऋाणा भवन्ति कुर्वाणा अकूपारस्तु कच्छपे ॥ १७ ॥
आदित्ये च समुद्रे च दावा स्याद्दातृदानयोः ।
लोधं लुब्धेऽथ वाशी स्याद्दारुच्छेदनसाधने ॥ १८ ॥
इदानीमपि चेत्यर्थे नू च स्यान्नूचिदित्यपि ।
विपुणो विषमेऽपि स्यान्मन्दीति स्तुतिमत्यपि ॥ १६ ॥
अदितिर्देवमाता स्यात्प्रकृतिर्भूरखण्डिता ।
शिशीते तु श्यतीत्यर्थे सुतुकः सुप्रजाः सुगः ॥ २० ॥
पुनरुक्ते जामिशब्दो भगिन्यादौ च बालिशे ।
पिता तु प्रभुराजन्म जसुरिस्ताडिते तथा ॥ २१ ॥
बद्धमुक्ते च निहतवेगश्रान्ते बुभुक्षिते ।
एरिरे प्रेरयामासुः शंयुः सुखयुरुच्यते ॥ २२ ॥
बृहस्पतिसुते रोगशमने भयनाशने ।
अमायुवोऽप्रमाद्यन्तोऽप्रगच्छन्तोऽपि वा मताः ॥ २३ ॥
अस्या अस्येति षष्ठ्यन्तं पदद्वन्द्वमुदात्तवत् ।
आदेशेऽथानुदात्तं स्यादन्वादेशे यदा भवेत् ॥ २४ ॥
भुव्यध्वनि गतौ गातुस्तूतावववृधे समौ ।
दंसयो दासकर्माणि सन्ति सुमायणाः सुगाः ॥ २५ ॥
तास्तु यज्ञगृहद्वार इति यास्कोऽभिमन्यते ।

र्चिषः शाकपूर्णस्तु मते सुमायणा इति ॥ २६ ॥
इमौ सूर्ये बलीवर्दे धेनौ भुवि च वाचि च ।
जेऽम्बुनि शरे स्वर्गे लोम्नि गौरिति पठ्यते ॥ २७ ॥
च्यवनो वा च्यवानो वा भार्गवे स्तोतरि स्मृतः ।
रते स्तौति वियुते पृथग्भावे ऋधक् पृथक् ॥ २८ ॥
वयसे नाशयस्यर्थे जुहुरे जुह्वरे यथा ।
द्वेषष्टिपदजातानामेवमर्था निरूपिताः ॥ २६ ॥

*

रस्निर्मेघेऽपि संस्नातेऽप्यन्धोऽन्नाद्दकूतमः स्वपि ।
मथ कामयमाने स्याद्वावशानोऽभिवक्तरि ॥ ३० ॥
गर्थ्यं तु वरणीयं स्याद्यदत्यन्तं वरं भवेत् ।
तो वृत्रवहे,सिद्धः, क्रोधे घाते वनुष्यति ॥ ३१ ॥
मन्दना तु स्तुतौ, क्रूरवाक्यादाहन्तराहनः ।
माशिष्टाद्वैषमस्तारीदित्यर्थेऽस्ना इतीष्यते ॥ ३२ ॥
मात्रं धने च क्षिप्रे च तरुष्यति जिघांसति ।
पत्यध्येतरि ऋषौ नद ऊतिस्तु तर्पणे ॥ ३३ ॥
रक्षार्थां हासमानन्तु स्पर्द्धमाने च हृष्यति ।

सत्सं माध्यमिकं ज्योतिरुच्यतेऽनित्यदर्शनात् ॥ ३४ ।
स्पर्शनैर्बाधनैः पानैः पादैः पड्भिर्द्विता द्विधा ।
पविर्वज्रे वाचि यज्ञे रथचक्रमधावपि ॥ ३५ ।
वाहिष्ठोऽत्यधिकं वोढाऽऽह्वाता वाऽत्यधिकं च यः ।
आ आत्या वरितारश्च केषांचिदुपसो मते ॥ ३६ ।
वराहोऽभ्रे च भूदारे वराहा आङ्गिरोगणाः ।
ये च माध्यमिका देवगणास्ते तु वराहवः ॥ ३७
प्रजापतिः पुरा वायुर्भूत्वाऽप्सु विचरँस्ततः ।
उज्जहार स एमुषो वराहः पृथवीमिमाम् ॥ ३८
वृत्ते चाग्ने च मन्त्रे च देवे चार्कः प्रतिष्ठितः ।
अन्तरिक्षे तु धन्व स्याद्धन्वा स्यान्मरुदेशके ॥ ३६ ॥
भुजयोरन्तरं वक्षः पक्षसी ये द्विदिङ्नते ।
सचा सह सिनं त्वन्नं मह्यावेगः पृथुज्रयाः ॥ ४० ॥
असश्चन्ती न सज्येते न व्युदस्यत एव वा ।
अन्तरेण समानेनान्योन्यमाश्रित एव ये ॥ ४१ ॥
इषवोऽङ्गुलयः शर्य्या इत्था त्वित्थमुभौ समौ ।
या सोमक्रयणी गौः स्यात् तत्र नामैव चित्पदम् ॥ ४२ ॥
पूजोपमावकुत्सादावनुदात्तं तु चित्पदम् ।

आघृणिस्त्वागतक्रोधे तथैवागतदीप्तिके ॥ ४३ ॥
द्युम्नं धनयशोऽन्नेषु पवित्रं त्वप्सु रश्मिषु ।
मन्त्रेऽप्यग्नौ च वायौ च सोमे सूर्ये मघोनि च ॥ ४४ ॥
अङ्गूषः स्तोम एवेष्टः, काणुका कामुकोऽथवा ।
हृतपानाभिलाषो वा काणुका कणशः कृतम् ॥ ४५ ॥
शिपिविष्टपदेनासौ विष्णुः मायो विशेष्यते ।
अर्वागर्थे तूपमार्थे चार्थेऽप्यर्थेऽपि आ इति ॥ ४६ ॥
तोदस्तुदो गृहस्थः स्यात् कूपो भूविलमेव वा ।
स्वञ्चाः सुगमनो योऽर्थो नाडी कुल्या नदी श्मशा ॥ ४७ ॥
आदित्ये द्वादशे विष्णुर्यज्ञे वा व्यापकेऽपि वा ।
उर्वश्यप्सरासि प्रज्ञाकान्त्योस्तु वयुनं भवेत् ॥ ४८ ॥
वृकस्तु चन्द्र आदित्यः श्वा वज्रोऽथ वृकी शिवा ।
आपान्तमन्युः सोमे स्यादिन्द्रे वा मन्युयोगतः ॥ ४९ ॥
तूर्णाशं शीघ्रसंव्यापि शीघ्रभक्ष्यथवोदकम् ।
गाढमङ्गैः परिष्वक्ता ग्रथिता परिकीर्तिता ॥ ५० ॥
गध्यं तु ग्रहणीयेऽर्थे सोमे भूयः प्रयुज्यते ।
स्तोमं प्रति गतो यज्ञं प्रति वा गत आश्रितः ॥ ५१ ॥

वाजपस्त्यो वाजगन्ध्यः सोमे ह्यन्नविशेषितं ।
जोपवाकमविस्पष्टवचनं श्रव्यवागपि ॥ ५२ ॥
निचुम्पुणपदेनासौ सोमः प्रायो विशेष्यते ।
निचुम्पुणः समुद्रोऽपि वरुणोऽवभृथोऽपि च ॥ ५३ ॥
कृतयात्रे कौरयाणस्तौरयाणस्तु शीघ्रगे ।
क्षुम्पं त्वहिच्छत्रकं स्यात् क्षुभ्यते यद्यत्नतः ॥ ५४ ॥
पादुः पादतलासक्तचर्म्मकाष्ठादिके गमे ।
पदिः पक्षी, परीत्येतत् सर्वतोभाव इष्यते ॥ ५५ ॥
भागवीप्सालक्षणेत्थंभूताख्यानेषु वर्जने ।
हरयाणो नित्यकालमभिप्रस्थितयानके ॥ ५६ ॥
प्राणैश्वर्यादिहरणमयाणो वापि गद्यते ।
अह्रयाणो वदान्यत्वादलज्जितगतिर्मतः ॥ ५७ ॥
निष्षपी क्षीरतो यस्य शेपो नित्योद्धृतः स्त्रियै ।
तूतुमाकृष इत्येतत्तूर्णमाकुरुषेऽपि वा ॥ ५८ ॥
त्वरया कुरुषे वापि काकुदं तालु कथ्यते ।
केपयस्तु कपूयाः स्युर्ये हि दुष्कर्म्म कुर्वते ॥ ५९ ॥
अंसत्रं कवचं वा स्याद्धनुर्वाऽप्यथ वीरिटे ।
शून्यस्थानेऽन्तरिक्षे वा समवायेऽपि वा नृणाम् ॥ ६० ॥

चर्पणिस्तु जनो द्रष्टा सृणिर्दात्रेऽङ्कुशेऽपि च ।
शम्बो वज्रेऽथ निर्दिशेऽपीदमर्थेऽपि वेमिति ॥ ६१ ॥
सीम् स्यात् सीमान इत्यर्थे व्यर्थं वा पदपूरणम् ।
एनामेनं द्वितीयान्तं पदद्वन्दमुदात्तवत् ॥ ६२ ॥
आदेशेऽथानुदात्तं स्यादन्वादेशो यदा भवेत् ।
समः सर्वोऽच्छशब्दस्याभिमुख्ये वृत्तिरिष्यते ॥ ६३ ॥
अथवा प्राप्तुमित्यर्थो मन्यते शाकपूणिना ।
कुटः कृतेऽथर्व्युरिति वह्नौ गमनशालिनि ॥ ६४ ॥
अथेर्य्यवो बाहवः स्युरथर्य्योऽङ्गुलयः स्त्रियः ।
अध्रिगुस्त्वग्निरिन्द्रश्च यस्याप्रतिहता गतिः ॥ ६५ ॥
मन्त्रोऽप्यध्रिगुरुद्दिष्टः कृत्तिरन्नं यशोऽपि च ।
कृत्तिश्चर्ममयं वस्त्रं कन्था सूत्रमयी तथा ॥ ६६ ॥
श्वघ्नी स्यात् कितवोऽहानि स्वसराणि भवन्ति हि ।
भन्दी तु मृदुलो वा स्यान्मार्दवापादकोऽपि वा ॥ ६७ ॥
इत्यर्थाश्चतुराशीतिपदानामूहिना बुधैः ।

*

आशुशुक्षणिरग्निः स्यादाशास्तूपदिशो दिशः ।
सललूकं तुतदूरक्षः संलुब्धं पापकं च यत् ॥ ६८ ॥
संमूढं प्रच्युतं स्थानादथवाऽप्यपसारि यत् ।
अलमातर्दनो योऽर्थः स मेघः स्यादलातृणः ॥ ६९ ॥
अलातृणः कुणारुश्च कियेधाश्च शिरिम्बिठः ।
इलीविशः करपयं च पड्भिर्मेघो विशिष्यते ॥ ७० ॥
कुणारुः कणनस्तद्वत् करपयः स्यात् सुखोदकः ।
नक्षदाभमभिव्याप्य हन्तारं विद्धि वज्रिणम् ॥ ७१ ॥
काशिर्मुष्टिः सवीमेति स्यादनुज्ञार्थकं पदम् ।
मृदूदरस्तु यः सोमः स एव स्याद्दृदरः ॥ ७२ ॥
अर्दनात्पालकौ बाहू ऋदूपे भवतोऽथवा ।
ऋदुशब्दो मर्मवाची बाहू स्तो मर्मपालकौ ॥ ७३ ॥
किः कर्ता, यस्तु दीर्घायुः सोऽस्क्रधोयुः क्रधुर्लघुः ।
हनू असंखादन्त्यौ चेत् कथयेते असिन्वती ॥ ७४ ॥
प्रसिद्धदीप्तिमत्त्वा तु भाऋजीकोऽग्निरुच्यते ।
पुलुकामस्तु बहिच्छो रुजाना नद्य ईरिताः ॥ ७५ ॥
जूर्णिर्हेतिश्चमूः क्रोध ओमना त्ववनेन वा ।
उपलप्रक्षिणी धान्यभर्जनी सक्तुकारिका ॥ ७६ ॥

पाथोऽन्तरिक्षमापोऽन्नं समथाः सर्वनः पृथुः ।
कपनाः कृमयो, देवाच्या कृपेति पदे युजौ ॥ ७७ ॥
देवान् प्रत्यक्तया तद्वत् कल्पयेत्यर्थमाहतुः ।
वृत्रदुक्थो महोक्थः स्याद्यस्मै वोक्थं प्रयुज्यते ॥ ७८ ॥
वणिक् प्रकलविद् यो हि गणितं वेत्ति तत्त्वतः ।
ओषध्यो वीरुधोऽथापः क्षुरुधोऽन्नं चनः स्मृतम् ॥ ७९ ॥
शशमानः शंसमानः शाशदानस्तु यो मुहुः ।
अत्यन्तं वा शातयति आयन्तस्तु समाश्रिताः ॥ ८० ॥
समाश्रयन्तः आयन्तः, पक्तस्तु पचता समौ ।
अग्रिया तु भवेदग्रा ऽग्रगत्याप्यग्र एव वा ॥ ८१ ॥
विज्ञानानि च यज्ञाश्च विदथानि प्रचक्षते ।
विजामाता न यत्रास्ति जामातुः सर्वलक्षणम् ॥ ८२ ॥
ईक्षे तथेशिषे तुल्यौ क्षोणो निवसिता भवेत् ।
क्षोणं निवासस्थानं स्याद् भवन्त्यापस्तु विस्रुहः ॥८३॥
अभ्यर्द्धयज्वा पूषा स्मान्मरुद्भ्योऽभ्यर्धयन् रसान् ।
मूनानि वाभिमुख्येन वृद्ध्या योजयतीह सः ॥ ८४ ॥
दुरितं दुर्गतिकरं स्तिया आपोऽतिसंहताः ।

शीघ्रं सम्भाजको योऽर्थः स तुर्वणिरुदाहृतः ॥ ८५ ॥
स्तिपा अग्निर्हिमाद् पाति कूपो वा पात्युपस्थितान् ।
श्रुष्टी क्षिप्रं सुखं धान्यशलाकाप्यभिधीयते ॥ ८६ ॥
सोमानमभिषोतारमोमासो रक्षकास्तथा ।
तर्पकास्तर्पणीयाश्च सोऽमिनो यो ह्यहिंसितः ॥ ८७ ॥
अमिनोऽमितमात्रश्चानन्तकालोऽपि वामिनः ।
अमूर इत्यमूढः स्यात् किमीदी पिशुनो मतः ॥ ८८ ॥
सृप्रः सर्पोऽय सर्पिर्वा तैलं वा सर्पणाद् भवेत् ।
शिप्रे हनू नासिके वा सुशिप्रो यस्य ते शुभे ॥ ८९ ॥
क्रः प्राकार इत्युक्तो यदाक्रामति सोऽम्बरम् ।
सूर्ते सुविस्तृते व्योमन्यसूर्ते वायुविस्तृते ॥ ९० ॥
यस्त्वमत्यागतो युद्धेऽन्येनाप्रतिगतोऽपि वा ।
योऽप्रतिस्खलितः पूर्वमन्याप्रतिहतोऽपि वा ॥ ९१ ॥
पराङ्मुखः कृतो नो यः स च स्यादप्रतिष्कुतः ।
सुविदत्रः सुविद्यः स्याद् सुदत्रस्तु सुदातरि ॥ ९२ ॥
अभ्यक् त्वसम्यगेव स्यादृक्षृष्टिर्वाभिगता रिपून् ।
सहभुनापि वा सा स्याद् रमणीयेषु रंस्विति ॥ ९३ ॥

गिर्वणाः स्तुतिसंभक्ताः शक्रो गीर्वाण एव वा ।
सूर्य्यस्येव स्वतो भूतः प्रकाशोऽस्रतिरुच्यते ॥ ९४ ॥
आशीः सान्ता शुभाशास्ति रान्ता त्वाशिरमाह च ।
आशिरं दधि मन्यन्ते दध्यर्थं पय एव वा ॥ ९५ ॥
अस्मदः सर्वलिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु वृत्तमस्मे इदं पदम् ॥ ९६ ॥
जारयायीति चाख्यातमजनीत्यर्थ इष्यते ।
तमीजरयिता गन्ता चोसः स्याज्जारयायि वा ॥ ९७ ॥
यादृस्मिन् यादृशेऽथानुपूर्व्यमेवानुषक् स्मृतम् ।
उपर्य्युपरिसंलग्नमनुषक्तं तदानुषक् ॥ ९८ ॥
सुमत् स्वयमथो तुञ्जः कथितो दानवज्रयोः ।
अमीवा गर्भविध्वंसी कृमिर्वा रोग एव वा ॥ ९९ ॥
अमात्यवान् यत्नवान् वा रोगभूतोऽपि वाऽमवान् ।
अप्वा व्याधिर्भयं वापि मेघस्तु स्यादिलीविशः ॥१००॥
ततनुष्टिस्तु विषयोपभोगैकाक्रियापरः ।
अंहूरणोऽन्धकूपः स्यादंहस्वानथवांहुरः ॥ १०१ ॥
वकुरो भास्करो दीप्तो ज्योतिर्हेतिर्भयंकरः ।
स भास्वद्द्रविणो वापि रुशद्वर्णस्तु रोचनः ॥ १०२ ॥

असक्रा त्वनपाया स्यादथासाधारणी च सा ।
उल्वं जरायोरप्यन्तर्गर्भवेष्टनमुच्यते ॥ १०३ ॥
येनाशयन्ति हिंसन्तं ते कथ्यन्ते रिशादसः ।
अविश्लथमविश्रान्तं शीघ्रं वापि हरन्ति ये ॥ १०४ ॥
तेऽश्वानिश्रम्भाः कथ्यन्तेऽनवायं त्वावियोजनम् ।
निःशेषं चानवायं स्यात् क्रियेधा इन्द्रमेघयोः ॥ १०५ ॥
आशौ धाना ऋजीषं च ताविन्द्राश्वौ मतद्रसू ।
स्यादागल्दापि गल्दापि नाडी गलितधारिणी ॥ १०६ ॥
जह्नवोऽग्निविहीनः स्यादसमाप्तमसामि च ।
कीकटा असदाचारास्तद्देशाः कृपणा अपि ॥ १०७ ॥
ऋषिः कृपिः पराभूतिकर्तेन्द्रश्च पराशरः ।
शिरिम्बिठस्तु मेघः स्याद् भारद्वाजः शिरिम्बिठः॥१०८॥
वेकनाटा वार्द्धुषिका वृन्दं जनसमूहके ।
इषुर्बुन्दोऽशनिर्बुन्दो हिनोत हिनुतेतिवत् ॥ १०९ ॥
यस्त्वप्रतिहताङ्गः स्यात् कथ्यते सोऽनवब्रवः ।
उराणो बहु कुर्वाण उपस्थे तूपसीति च ॥ ११० ॥
दिविष्टयो दिव्यगतिप्रसाधिन्यः क्रिया मताः ।
अभिधेतनशब्दस्य भाषायामभिधावत ॥ १११ ॥

जिन्वन्ति प्रीणयन्तीति कुलिशं वज्रमुच्यते ।
अजीगरिति चागारी रतिस गृह्णासि वा तथा ॥ १.२१ ॥
अनश्लीलप्रदाता योऽनर्शरातिः स उच्यते ।
अनश्लीलप्रदानं वानर्शरातिरुदाहृता ॥ १.३१ ॥
क्रिविर्दती शतघ्नी स्यात् तुरीपमुदकं मतम् ।
रास्पिनः शब्दवन्नीरं तद्वान्मेघोऽपि रास्पिनः ॥ १.१४ ॥
उच्चार्यमाणस्तोत्रेण स्तोता वा रास्पिनः स्मृतः ।
अमत्रोऽपरिमाणः स्यात् स च योऽनभिहिंसितः ॥१.१५
ऋजुनीती त्ववक्राध्वनेतारौ साधुसंविदौ ।
यथेच्छस्तूयमानार्थगुणशाली ऋचीषमः ॥ १.१६ ॥
द्विबर्हा वर्धमानो यो द्वयोरपि दिवोः समम् ।
हिंसा वृद्धिः परिवृढो वर्हणा परिवर्हणा ॥ १.१७ ॥
चायन् कामयमानो वा चाकन् कामयतेऽपि वा ।
स्तोत्रं जरूथं दूतस्तु वृत्तवाह्यथ ऋभ्रतिः ॥ १.१८ ॥
आत्मसात्करणे धातुः स समीकरणेऽपि च ।
जवारु मण्डलं भानोरनर्वाऽन्यसमाश्रितः ॥ १.१६ ॥
चोष्कूयमाणस्तु भृशं व्युदस्यन् वा भृशं ददत् ।
चोष्कूयते भृशं दत्ते व्युदस्यत्यथवा भृशम् ॥ १२०॥

भ्रमिता वा भ्रमयिता भूमिराग्निर्विशेष्यते ।
वतस्तु दुर्वलोऽर्थः स्य द् वत खेदानुकम्पयोः ॥ १२१ ॥
वहुकर्मा वहुभङ्गः पुरन्धिः स्याद् पुरन्दरः ।
वरुणोऽपि पुरन्धिः स्याद् वाताप्यं वर्षकोदकम् ॥१२२॥
रघं वा रंहणं वापि यदिच्छति रघर्य्यति ।
कृत्तदन्ततया देवः पूषा प्रोक्तः करूडती ॥ १२३ ॥
स्यादलक्ष्मीः सदान्वेति दुर्भिक्षस्यापि देवता ।
जञ्झतीरीदृशं शब्दं कुर्वाणा आप एव च ॥ १२४ ॥
इदं कामयमानो यः स इदंयुरुदाहृतः ।
वसूयुर्विप्रयुः शंयुः कियुरित्याद्यस्तथा ॥ १२५ ॥
शरारुः संशिशरिषुर्विद्धि दानपरान् दनः ।
आकम्पनस्त्वाथवः स्याद् विभासत्वात्तु विप्पितः ॥१२६ ॥
इतश्चेतश्च विस्तीर्णो विभास इति कथ्यते ।
अवीसं पृथिवीमाहुर्नैगमार्थविशारदाः ॥ १२७ ॥
इतीत्थमर्था आख्याता यास्कव्याख्यानुसारतः ।
द्वात्रिंशशतसंख्यानां पदानामपि पूर्ववत् ॥ १२८ ॥

*

शब्दसारूप्यसम्बन्धादर्थबोधाविरोधतः ।
प्राचीनैरूहिता अर्थाः सर्व एवात्र दर्शिताः ॥ १२६ ॥
अदूधेया नैव ते सर्वे प्रादेशिकतया कृताः ।
अनैकान्त्यात् प्रदेशस्य मण्डलीमण्डपादिषु ॥ १३० ॥

पदजात्याऽभिधेयेन संस्कारेण स्वरेण वा ।
गुणेन वा त्रिभागेन विक्षेपेण क्रमेण वा ॥ १३१ ॥
अध्याहारेण वा तद्वद् व्यवधानादितोऽपि वा ।
यानि यानि पदान्यत्र निर्धार्यन्ते न तत्त्वतः ॥१३२॥
यानि वा परिदृष्टानि बहुष्वर्थेषु कानिचित् ।
तेषां कृतो विमर्शाय पदानामेष संग्रहः ॥ १३३ ॥

स्वेति नाम निपातो वा पदं जात्या न निश्चितम् ।
शितामेति गुदं शाकपूणोर्यास्कस्य दोः पशोः ॥ १३४ ॥
तैटिकेस्तु यकृच्छयामं तस्माद्वाक्यं न निश्चितम् ।
ईम्मान्तास ऋबीसं च संस्कारे नावधार्यते ॥ १३५ ॥

"वने न वायो"—* इत्यत्र स्वरान्नावगतं पदम् ।
प्रदेशतोऽनवगतं "करूडत्यादिकं पदम्" ॥ १३६ ॥
मेहनेत्यत्र न ज्ञातो विभागोऽस्ति विरोधतः ।
तत्रैकपद्यं शाकल्यो मेने गार्ग्यः पदत्रयम् ॥ १३७ ॥
द्यावा नः पृथिवीत्येतद्विद्वत्त्वेपानवधारितम् * ।
क्रमस्तूपरमध्वं म—इत्यादौ नावगम्यते * ॥ १३८ ॥

---

* वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः ।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥
ऋ० सं० ७ । ७ । २२ । १ ऐ० आ० ५ । ३

अत्र वेति य इति पदद्वयं शाकल्यो मेने । किन्तु पदद्वयसत्त्वे यद्वृत्तात्परस्य न्यधायीत्याख्यातस्योदात्तत्वमभविष्यत् । दृश्यते तु निघातः। तस्माद् - वाय—इत्येकमेव पदम् ।

* द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् । ऋ० २ । ८ । १० । ५

* रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्त्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषाऽवस्युरह्वे कुशिकस्य सूनुः ॥
ऋ० ३ । २ । १२ । ५ ।

का क्रिया "दानमनसो नो मनुष्यान्" इति स्थले ।
वायुर्नियुत्वान्—*इत्येतद् व्यवधानान्न निश्चितम् ॥ १३९ ॥
इत्थं दशानवगमाः शब्दा एते प्रदर्शिताः ।
ततोऽन्यथापि बहुधा दृश्यते सङ्करक्रमः ॥ १४० ॥
तत्र तत्र प्रकरणे यादृगर्थोऽवभासते ।
तथा तथार्थं कल्पन्ते मतिभेदात् पृथक् पृथक् ॥ १४१ ॥
इत्थमेवेति नाद्यापि तेऽर्थाः शक्याः प्रकल्पितुम् ।
अन्योऽप्यर्थो भवेदेषां प्रज्ञया संप्रधारितः ॥ १४२ ॥
कानिचित्तु पदान्यत्र बह्वर्थानि भवन्ति हि ।
रजोहरःसदृक्षाणि तेषां पाठः प्रसङ्गतः ॥ १४३ ॥

---

## इति ऐकपदिकार्थवर्गः । ८

---

* प्र वावृजे सुप्रया बर्हिरेषामा विश्पतीव बीरिट इयाते ।
विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ।
ऋ० सं० ५ । ४ । ६ । २ ।

स्तृभिर्ऋक्षा च नक्षत्रे, तथाऽल्पे दभ्रमर्भकम् ।
मेना ग्नाः स्त्रीष्वथ एनाऽन्वादेशनिर्देशकर्म्मणि ॥ १ ॥

अभित्वे च भपित्वे चासन्ने, मासे तिरः सतः ।
स्यातामावपने शब्दावूर्दरं कृदरं तथा ॥ २ ॥

रम्भः पिनाकं दण्डे स्याद्, वम्रीभिरुपजिह्विका ।
सीमिकास्तु, प्रजनने शेपः स्याद् वैतसोऽपि च ॥ ३ ॥

अर्द्धे त्वनेमौ, सचते सिषक्तु च निषेवणे ।
भयवेपनयोः स्यातां भ्यसते रेजतेऽपि च ॥ ४ ॥

इति द्विपदैकार्थसंग्रहः ८

---

स्वर्गः पृश्निर्नभो नाको विष्टप् चेति पदानि षट् ।
समानि दिवि चादित्ये साधर्म्यात् परिचक्षते ॥ १ ॥

खेदा तु किरणा गावो रश्मयोऽभीशवस्तथा ।
आदित्यरश्मिवत् प्रोक्ता एते पञ्चाश्वरश्मिषु ॥ २ ॥

अद्रिर्गोत्रो गिरिर्ग्रावा पर्वतोऽश्मा व्रजो वलः ।
रौहिणो रैवतोऽप्यश्नो वराहः शम्बरुश्चरुः ॥ ३ ॥

पर्शानः * पुरुभोजाश्च फलिगश्चोपरोपलौ ।
शैलेऽपि मेघवत् प्रोक्ताः शब्दा एकोनविंशतिः ॥ ४ ॥

---

## इति द्व्यर्थसाधारणपदानि ६

---

* बलिशानः इत्यपि शब्दपाठः ।

# अनेकार्थवर्गः ६

## अ

अथादित्ये समुद्रे चाकूपारः कच्छपेऽपि च । 
अक्षरं वाचि तु क्लीबेऽक्षये त्रिषु तथोदके ।
यज्ञेऽध्वरोऽध्वरं व्योमन्यपस्तूदककर्म्मणोः ॥ १ ॥
अप्नस्तु पदनाम स्याद्रूपेऽपत्ये च कर्म्मणि ।
अभ्रो महति पुंसि स्यादभ्रं तूदकमेघयोः ॥ २ ॥
अमतिः पदनाम स्याद्रूपेऽप्यमतिरुच्यते ।
अम्बरं त्वन्तिकव्योम्नोरर्को वज्रान्नयोः पदम् ॥ ३ ॥
ह्रस्वेऽर्भकोऽर्भकं तु स्यादुत्तराणि पदान्यधि ।
पृथिव्यामवनिर्नद्यङ्गुलिष्ववनयः पृथक् ॥ ४ ॥
अश्वः पदं च मेघे च पदमञ्ज्या तथा गति ।
नदीषु च जले त्वर्णाः द्रिराशिः पदनामसु ॥ ५ ॥
अजिरं चाजिराश्चेति क्रमात् क्षिप्रे नदीष्वपि ।
अदितिः पदनाम द्विः पृथिव्यां गवि वाचि च ॥ ६ ॥
द्यावाभूम्योरेकयोक्त्याऽप्यदिती इति चक्षते ।

अहिः पदं जले मेघे द्यावाभूम्योस्तु गव्यही ॥ ७ ॥
अभीके इति सङ्ग्रामे चोत्तराणि पदान्यधि ।
अभीशवः पदं रश्म्यङ्गुलिषु द्विलतो भुजे ॥ ८ ॥
नद्यङ्गुलिष्वग्रुवस्युर्महत्यद्भुतमद्भुतः ।
पुंसि क्लीबे चोदकेऽम्ब्वर्जुनं रूपेऽर्जुनीत्युषाः ॥ ९ ॥
अश्वेऽरुषोऽरुषं रूपे उषासि त्वरुषी भवेत् ।
उषस्येव त्वरूषी स्याद्धिरण्ये चोदकेऽमृतम् ॥ १० ॥

## आ

आपस्तु पदनाम स्यादन्तरिक्षे तथोदके ।
आशुरश्वे त्रिषु क्षिप्रे आके अन्तिकदूरयोः ॥ ११ ॥

## इ

वागन्नपृथिवीगोषु स्यादिला पदनाम च ।
इत्था पदं च सत्ये चेन्दुर्यज्ञोदकयोः पदम् ॥ १२ ॥

## ई—उ

ई जले च पदं च स्यात्, पदनाम द्विरुर्वशी ।

दिलूपराः पुमान् मेघे, गन्युस्रोस्रास्तु रश्मयः ॥ १३ ॥
उपाः पदं द्विरुर्वी तु द्यावाभूम्योस्तथा भुवि ।

## ऋ

ऋतः पदमृतं सत्ये धने स्यादुदकेऽपि च ॥ १४ ॥

## ओ–क

उदकेऽपि बलेऽप्योज उदकेऽपि सुखेऽपि कम् ।
त्तद्म इत्यन्न एव स्यात् त्तद्म स्यादुदकान्नयोः ॥ १५ ॥
उदकेऽपि धने त्तत्रं कशा वाच्युदके कशः ।
त्तपा जल त्तपा रात्रौ त्तितिर्भूः त्तितयो नराः ॥ १६ ॥
वज्रे पदं च कुलिशः कृत्तिर्गेहे पदं तथा ।
कृदरं तूत्तरपदं कृदरः स्याद्गृहार्थकः ॥ १७ ॥

## ग–घ

बाह्वोर्गभस्ती भूम्नि स्याद्रश्मिष्वप्यङ्गुलिष्वपि ।
भारमुदके क्लीबे गंभीरा महति त्रिषु ॥ १८ ॥

गंभीरा वाचि गंभीरे द्यावाभूम्योर्गभीरवत् ।
गयो गृहधनापत्ये मातुर्भूमौ पदं तथा ॥ १९ ॥
गोत्रो मघो मही गोत्रा गौः पदं द्विरुदीरितम् ।
गौः स्तोता वाक्पृथिव्योर्गौः गौः साधारणनाम च॥ २० ॥
गौरी वाचि पदं च स्याद् घर्मयज्ञे दिने पुमान् ।
घृणिर्दिने घृणिः क्रोधे ज्वलद्रस्तु तथा घृणिः ॥ २१ ॥

## च—ज

चर्षणिः पदनाम स्याद्भूम्नि चर्षणयो जनाः ।
पुनरुक्ते जामिशब्दो भगिन्यादौ च बालिशे ॥ २२ ॥
सुखे जले जलाषं स्याज्जूर्णिः क्रोधे च सत्वरे ।
जूर्णिः पदं सत्वरे तु जूर्णिरित्यपि दृश्यते ॥ २३ ॥

## त

त्वष्टा पदं त्रिरुद्दिष्टं तार्क्ष्योऽश्वः पदनाम च ।
यज्ञाकाशवारिप्राग्निवाचकस्तुग्र इष्यते ॥ २४ ॥
तुञ्जः पदं च वज्रं च तुर्वशस्तुर्वशेऽन्तिके ।

तुर्वशास्तु मनुष्याः स्युस्तृयं क्षिप्रे तथोदके ॥ २५ ॥
तेजो जले ज्वलत्यर्थे तोयं क्षिप्रे तथोदके ।

## द

अश्वनाम दधिक्रेति दधिक्राः पदनाम च ॥ २६ ॥
दभ्रं परपदं ह्रस्वे द्रविणं तु धने बले ।
दिधीतयो दीधितयोऽप्यङ्गुलिष्वपि रश्मिषु ॥ २७ ॥
द्युम्नं पदं धनेऽपि स्याद् दृतो द्विः पदमुच्यते ।

## ध—न—प

अन्तरिक्षे पदं धन्व धीः प्रज्ञायां च कर्म्मणि ॥ २८ ॥
धेनुः पदं वाच्यपि स्यान्नदः स्तोतरि वा पदम् ।
नद्यः पदं च नद्यां च नभः साधारणं जले ॥ २९ ॥
चज्रान्नयोर्नमःशब्दो नरोऽश्वे च मनुष्यके ।
नराशंसः पदं द्विः स्यान्नृम्णं तु स्याद्धने बले ॥ ३० ॥
नेमः परपदं चान्ने, पयोऽन्नजलरात्रिषु ।
पशो ज्वलद्धस्त्वापि स्यात्पदं यज्ञः प्रजापतिः ॥ ३१ ॥

पविः पदं वज्रवाचोः स्यादन्नोदकयोः पयः ।
जले पदं पवित्रं स्यात्पाजस्त्वन्ने बलेऽपि च ॥ ३३ ॥
द्यावाभूमी पुरन्धी स्यात्पुरन्धिः पदनाम च ।
पूषा पदं पृथिव्यां च पृतना मानुषे रणे ॥ ३३ ॥
अन्तरिक्षे तु पृथिवी पदनाम च तात्रिधा ।
द्यावाभूमी च भूः पृथ्वी पेशो रूपहिरण्ययोः ॥ ३४ ॥

## ब

अश्वे महति च ब्रध्नो ब्रह्म त्वन्ने धने जले ।
उदके चान्तरिक्षे च बर्हिः स्यात्पदनाम च ॥ ३५ ॥

## भ–म–य

भगः पदं धनेऽपि स्याद्भूर्भूमौ चान्तरिक्षके ।
सुखे जले भेषजं स्यान्मन्युः क्रोधे पदं तथा ॥ ३६ ॥
मेधाविषु मनुष्याः स्युर्मनुष्या मनुजेष्वपि ।
मरुद्धिरण्ये रूपे च ऋत्विक्षु मरुतः पदम् ॥ ३७ ॥
महोमहद्दिमौ शब्दौ महत्यप्युदकेऽपि च ।

गोवाग्धरित्रीषु मही द्यावाभूमी तथा मही ॥ ३८ ॥
यज्ञमेधाविनोर्मेधो मेधा तु धनमुच्यते ।
परं पदं वाक् च मेना द्विरुद्दिष्टं पदं यमः ॥ ३९ ॥
यशो धनोदकान्नेषु योनिः स्यादुदके गृहे ।

र

रनः पदं रजो रात्री रयिस्तु स्याद्धने जले ॥ ४० ॥
रसो वागुदकान्नेषु रुजानास्तु पदं नदी ।
रुद्रः पदं स्तोतरि च रुभुनौ रोदसी पदम् ॥ ४१ ॥
रोहितोऽग्ने रोहितश्चाङ्गुलिष्वापि नदीष्वपि ।

व

वधो बले च वज्रे च वनं रश्मिषु चोदके ॥ ४२ ॥
वयुनं पदनाम स्यात् प्रशस्यप्रज्ञयोरपि ।
वराहस्तु पदं मेघे वरुणः द्विः पदं मनम् ॥ ४३ ॥
वसवो रश्मिषु पदं वसु रात्रौ धनेऽपि च ।
वाक्पदं वाक् च भाषायां मेधाव्यृत्विक्षु वाघतः ॥४४॥

वाजपश्वे समरे वाजे वाजस्त्वन्ने वलेऽपि च ।
वाशी वाचि पदं च स्याद् विभाता पण्डित पदम् ॥ ४५ ॥
विपो विदुष्वङ्गुलिषु द्विस्तु विश्वानरः पदम् ।
विष्णुर्यज्ञे द्विः पदञ्च, स्तेने वज्रे पदं वृकः ॥ ४६ ॥
वृत्रो मेघे धने वृत्रं, वेनो विद्यज्ञयोः पदम् ।
व्योमान्तरिक्षेऽप्युदके व्योमा तु दिशि दिश्यते ॥ ४७ ॥

## श

शची प्रज्ञाकर्म्मवाचु शर्म्म तु स्यात्सुखे गृहे ।
मेघे तु शम्बरः पुंसि शम्बरं तूदके बले ॥ ४८ ॥
शर्य्यापदं चाङ्गुलिषु अन्नस्त्वन्ने धनेऽपि च ।
शवो धने बलेऽपि स्यात् श्वात्रं तु स्याद्धने पदम् ॥ ४९ ॥
शिमे द्विः पदनाम स्यात्, शिल्पं रूपे च कर्म्मणि ।
शूपं बले मुखेऽपि स्यात् श्येनासोऽश्वे पदं त्वपि ॥ ५० ॥

## स—ह

सद्मोदके मद्म गृहे सद्म स्यात्समरेऽपि च ।

पदं तु सप्त ऋषयो रश्मिष्वपि तथोच्यते ॥ ५१ ॥
अन्तरिक्षे समुद्रः स्यात्समुद्रः पदनाम च ।
सरो वाच्युदकेऽप्येवं पदं वाक् च सरस्वती ॥ ५२ ॥
सलिलं बहु नाम स्यात्सलिलं जलनाम च ।
स्वः साधारणनाम स्यात्तथा स्वरुदकेऽपि च ॥ ५३ ॥
यज्ञाहःसूर्यदेवानां वाचकं स्वःपदं मतम् ।
सविता पदमुक्तं द्विः स्वधा नन्ने तथोदके ॥ ५४ ॥
स्वधे द्यावापृथिव्यौ स्नः स्वसराणि गृहेऽहनि ।
स्वसराणि पदं च स्यात्समन्ने पदं तथा ॥ ५५ ॥
सहो बले जलेऽपि स्यात्सहस्या रश्मिषु वा पदम् ।
भिन्नमन्ने पदं च स्यात्सुपर्णः पदमुच्यते ॥ ५६ ॥
सुपर्णा वाक् सुपर्णाः स्युरश्वेष्वपि च रश्मिषु ।
सूर्या वाचि पदं क्रोधज्वलतोस्तु हरःपदम् ॥ ५७ ॥
प्राहुः परे हरःशब्दं ज्योतिर्लोकोदकेषु च ।
हरितोऽङ्गुलयो नद्यो दिशश्चादित्यवाहनम् ॥ ५८ ॥
हविःपदं जलेऽपि स्याद् हेमोदकाहिरण्ययोः ।
हिरण्योदकयोर्हेमा होत्रा यज्ञे च वाचि च ॥ ५९

अनेकार्था इमे शब्दाः पूर्वमत्र प्रदर्शिताः
प्रागुक्ता एव नानार्थे दर्श्यन्ते केऽपि धातवः ॥ ६० ॥

—*—

अर्दति स्याद्वधे गत्यां व्याप्तिगत्योस्तु इन्वति ।
इरज्यतीति धातुस्तु ऐश्वर्यपरिचर्ययोः ॥ १ ॥
ऋच्छिः परीचारगत्योर्वधगत्योर्ऋणत्ति च ।
जरते पदमर्चायां जिन्वतीति पदं गतौ ॥ २ ॥
दभ्नोत्यपि वधेगत्यां धमत्यर्चावधे गतौ ।
ध्रुवत्यपि वधे गत्यां व्याप्तिगत्ये स्तु नक्षति ॥ ३ ॥
भन्दते भन्दतीति द्वौ ज्वलने पूजने क्रमात् ।
मन्दते ज्वलनेऽर्चायां मन्यते कान्तिपूजयोः ॥ ४ ॥
मर्दत्यपि वधे गत्यां मिनात्यपि वधे गतौ ।
मिनोत्यपि वधे गत्यां रयत्यीति गतौ पदम् ॥ ५ ॥
राति दाने गतौ च स्याद्राजत्यैश्वर्यपूजयोः ।
वनुष्यति पदं क्रोधे वेति गत्याप्तिकान्तिषु ॥ ६ ॥
वेनत्यर्चागतीच्छासु परिचारे गतौ शविः ।
सपत्यर्चापरीचारे स्वपित्यर्चननिद्रयोः ॥ ७ ॥

स्वरतीत्यर्चने गत्यां कान्तिगत्योस्तु हर्य्यति ।
ह्मयत्यर्चाभोजनयोरित्यनेकार्थधातवः ॥ ८ ॥
यज्ञवेदार्थयथार्थविज्ञानाय कृतश्रमः ।
मधुसूदनशर्म्मैषां मणिमालां विनिर्म्ममे ॥ ६ ॥
सरस्वत्याः करे सेयं निघण्टुमणिमालिका ।
समर्प्यते मांथलश्रीमधुसूदनशर्म्मणा ॥ १० ॥

---

## इत्यनेकार्थवर्गः ॥ ६ ॥

---

# बृहद्देवतावर्गः १०

अथ केचित्प्रदर्श्यन्ते शौनकोक्ता यथायथम् ।
देवताविषयश्लोका दैवतज्ञानसिद्धये ॥ १ ॥
भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत् ।
अस्यैके सूर्य्यमेवैकं प्रभवं प्रलयं विदुः ॥ २ ॥
असतश्च सतश्चैव योनिरेषा प्रजापतिः ।
यदक्षरञ्च वाच्यञ्च यच्चैतद् ब्रह्म शाश्वतम् ॥ ३ ॥
कृत्वैष हि त्रिधात्मानमेषु लोकेषु तिष्ठति ।
देवान् यथायथं सर्वान् निवेश्य स्वेषु रश्मिषु ॥ ४ ॥
अग्निरस्मिन्नथेन्द्रस्तु मध्यतो वायुरेव च ।
सूर्यो दिवीति विज्ञेयास्तिस्र एवेह देवताः ॥ ५ ॥
अर्चिभिः केश्ययं त्वग्निर्विद्युद्भिश्चैव मध्यमः ।
असौ तु रश्मिभिः केशी तेनैनानाह केशिनः ॥ ६ ॥
न चैवैषां प्रसूतिर्वा विभूतिः स्थानजन्म वा ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ७ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते ।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत् ॥ ८ ॥

तासामियं विभूतिर्हि नामानि यदनेकशः ।
आहुस्तासां तु मन्त्रेषु कवयोऽन्योन्ययोनिताम् ॥ ९ ॥
यथास्थानं प्रदिष्टास्ता नामान्यत्वेन देवताः ।
तद्भक्तास्तत्प्रधानाश्च केचिदेवं वदन्ति ताः ॥ १० ॥
एतद्भूतेषु लोकेषु अग्निभूतं स्थितं त्रिधा ।
त्रिस्थानं चैनमर्चन्ति होत्रायां वृक्तबर्हिषः ॥ ११ ॥
इहैष पवमानोऽग्निर्मध्यमोऽग्निस्तु पावकः ।
अमुष्मिन्नेष विप्रैस्तु लोकेऽग्निः शुचिरुच्यते ॥ १२ ॥
इहाग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः ।
जातवेदाः स्तुतो मध्ये स्तुतो वैश्वानरो दिवि ॥ १३ ॥
वैश्वानरं श्रितो ह्यग्निरग्निं वैश्वानरः श्रितः ।
अनयोर्जातवेदाश्च तथैतौ जातवेदसि ॥ १४ ॥
सालोक्याच्चैकजातत्वाद् व्याप्तिमत्वात्तु तेजसः ।
यस्य यस्येह देवत्वं दृश्यते ते पृथक् स्तुताः ॥ १५ ॥
सत्वान्यमूर्त्तान्यपि च देवतावन्महर्षयः ।
तुष्टुवुः प्रशशंसुश्च तासु तासु स्तुतिष्विह ॥ १६ ॥
पृथक् पुरस्ताद् ये तूक्ता लोकादिपतयस्त्रयः ।

तेषामात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्यते ॥ १७ ॥
तेजस्त्वेवायुधं प्राहुर्वाहनश्चैव तस्य तत् ।
( यदन्यच्चोपकरणं तत्सर्वं तत्र कल्पितम् ) ॥ १८ ॥
स्थानं नामानि भक्तीश्च देवतायाः स्तुतौ स्तुतौ ।
सम्पादयन्नुपेक्षेत यां काञ्चिदिह सम्पदम् ॥ १९ ॥
अग्निभक्तिस्तुतान् सर्वानग्नावेव समापयेत् ।
यदिन्द्रभक्ति तच्चेन्द्रे सूर्ये सूर्यानुगञ्च यत् ॥ २० ॥

## अग्निभक्तयः

तत्र यत्पृथिवीस्थानं पार्थिवश्चाग्निमाश्रितम् ।
तत्सर्वमानुपूर्व्येण कथ्यमानं निबोधत ॥ २१ ॥
जातवेदाः श्रितो ह्यग्निमग्निं वैश्वानरः श्रितः ।
द्रविणोदास्तथेध्मश्च[1] श्रितश्चाग्निं तनूनपात्[2] ॥ २२ ॥
नराशंसः[3] श्रितश्चैनमेनमेवाश्रितस्त्विलः[4] ।
बर्हिर्[5]द्वारश्च[6] देव्योऽग्निमेनमेव तु संश्रिताः ॥ २३ ॥
नक्तोषासा[7] च देव्यौ च होतारावेतदाश्रयौ[8] ।
देव्यस्तिस्रः[9] श्रिताश्चैनं त्वष्टा[10] चैवैतदाश्रयः ॥ २४ ॥

श्रितो वनस्पतिश्चैनं स्वाहाकृतय आप्रियः ।
दैव्यौ दिव्यप्रभूतौ द्वावग्नी मध्यमपार्थिवौ ॥ २५ ॥
यदि वा वरुणादित्यावग्न्यादित्यौ प्रचेतसौ ।
तथाग्नीवरुणौ चापि केचिदिच्छन्ति सूरयः ॥ २६ ॥
इडा सरस्वती देवी भारती च यथाक्रमम् ।
पृथिव्यामन्तरिक्षे च दिवि देव्य इमा मताः ॥ २७ ॥
तनूनपातमाप्रीषु पठन्ति न पठन्ति च ।

*

अश्वश्च शकुनिश्चैव मण्डूकाश्चैतदाश्रयाः ॥ २८ ॥
ग्रावाणश्चैवमक्षाश्च नराशंसस्तथा रथः ।
दुन्दुभिश्चेषुधिश्चैतं हस्तघ्नोऽभीषवो धनुः ॥ २९ ॥
ज्या चैतदाश्रितेषुश्च श्रिता अश्वाजनी च या ।
वृषभो द्रुघणश्चैनमेनं पितुरुलूखलम् ॥ ३० ॥
नद्यश्चैवैनमापश्च सर्वाश्चौषधयस्तथा ।
रात्र्यप्वाग्नाय्यरण्यानी श्रद्धेडा पृथिवी तथा ॥ ३१ ॥

*

भजेते चैनमेवार्त्नी द्वन्द्वभूते च रोदसी ।
मुपलोलूखले चैनं हविर्द्धाने च ये स्मृते ॥ ३२ ॥
जोष्ट्री चोर्जाहुती चैनं शुतुद्रा च विपाट् सह ।
यौ च देवौ शुनासीरौ तौ चाग्नी चैतदाश्रयौ ॥ ३३ ॥
शौनकस्य शुनासीरौ वायुसूर्य्यावुदाहृतौ ।
शाकपूणेरिन्द्रसूर्य्याविन्द्रो यास्कस्य केवलम् ॥ ३४ ॥

*

लोकोऽयं, यच्च वै प्रातःसवनं क्रियते मखे, ।
अनुष्टुप् च त्रिवृत्स्तोमो, वसन्तशरदावृतू ॥ ३५ ॥
गायत्री, चैकविंशश्च, यच्च साम रथन्तरम् ।
साध्याः, साम च वैराज, भाप्त्याश्च वसुभिः सह ॥ ३६ ॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च ।
पर्जन्येनर्तुभिश्चैव विष्णुना चास्य संस्तवः ॥ ३७ ॥
अस्यैवाग्नेस्तु पूष्णा च साम्राज्यं वरुणेन च ।
देवतावाहनश्चैव हविषां वहनं तथा ॥ ३८ ॥
कर्म दृष्ट्या च यत्किञ्चित्सम्बद्धं विषये स्थितम् ।

अग्नेरेव तु तत्सर्वं कर्मेति परिभाष्यते ।
इत्युक्तोऽयं गणः सर्वः पृथिव्यग्न्याश्रयो महान् ॥ ३९ ॥

## इन्द्रभक्तयः—

यश्चेन्द्रो मध्यमस्थानो गणः सोऽयमतः परः ।
विमानानि च दिव्यानि गन्धर्वाप्सरसां गणः ॥ ४० ॥
इन्द्राश्रयस्तु पर्जन्यो रुद्रो वायुर्बृहस्पतिः ।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः ॥ ४१ ॥
मन्युश्च विश्वकर्मा च मित्रः क्षेत्रपतिर्यमः ।
तार्क्ष्यो वास्तोष्पतिश्चैव सरस्वांश्चैवमत्र ह ॥ ४२ ॥
अपां नपाद् दधिक्राश्च सुपर्णोऽथ पुरूरवाः ।
ऋतोऽसुनीतिर्वेनश्च तस्यै तस्याश्रयेऽदितिः * ॥ ४३ ॥
त्वष्टा च सविता चैव वातो वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाणश्च ये स्मृताः ॥ ४४ ॥
श्येनश्चैवैवमग्निश्च तथेला चैव या स्मृता ।
विधातेन्दुरहिर्बुध्न्यः सोमोऽहिरथ चन्द्रमाः ॥ ४५ ॥

---

* तथेन्दुश्च स्त्रियोऽदितिरित्यपि पाठः ।

विश्वानरश्च वै देवो रुद्राणां[1] संस्तुतो गणः ।
मरुतोऽङ्गिरसश्चैव पितरश्चर्भुभिः[2] सह ॥ ४३ ॥
राका वाक् सरमाप्साश्च भृगवोऽन्या सरस्वती ।
यम्युर्वशी सिनीवाली पथ्यास्वस्तिरुपाः कुहूः ॥ ४७ ॥
पृथिव्यनुमतिर्धेनुः सीता लाक्षा[3] तथैव गौः ।
गौरी च रोदसी चैव इन्द्राण्याश्चैव वै पतिः ॥ ४८ ॥

*

छन्दस्त्रिष्टुप् च पङ्क्तिश्च लोकानां मध्यमश्च यः ।
एतेष्वेवाश्रये विद्यात्सवनं मध्यमञ्च यत् ॥ ४६ ॥
ऋतू च ग्रीष्महेमन्तौ यच्च सामोच्यते बृहत् ।
शक्करीषु च यद्गीतं नाम्ना तत्साम शाक्करम् ॥ ५० ॥
आह चास्यैव तौ स्तोमावाश्रयौ शाकटायनः ।
यश्च पञ्चदशो नाम्ना संख्यया त्रिणवश्च यः ॥ ५१ ॥
संस्तुतश्चैष पूष्णा च विष्णुना वरुणेन च ।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥ ५२ ॥

---

१ ऋभूणामिति पाठान्तरम् । २ श्चर्तुभिरिति पाठान्तरम् ।
३ सीतेलाक्ष्येति पाठान्तरम् ।

स बृहस्पतिना चैव नाम्ना यश्चापि पर्वतः ।
मित्रश्च स्तूयते देवो वरुणेन सहासकृत् ॥ ५३ ॥
रुद्रेण सोमः पूष्णा च पुनः पूषा च वायुना ।
वातेनैव तु पर्जन्यो लक्ष्यते वै कचित्कचित् ॥ ५४ ॥
रसादानं तु कर्मास्य वृत्रस्य च निवर्हणम् ।
स्तुतेः प्रभुत्वं सर्वस्य बलस्य निखिला कृतिः ॥ ५५ ॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु गणः सौर्य्यो द्युस्थानस्तं निबोधत ॥ ५६ ॥

## सूर्य्यभक्तयः—

तस्य मुख्यतमौ देवावश्विनौ सूर्य्यमाश्रितौ ।
वृषाकपायी सूर्य्योषाः पत्न्यस्तिस्रो रवेरिमाः ॥ ५७ ॥
अमुतोऽर्वाङ् निवर्तन्ते प्रतिलोमास्तदाश्रयाः ।
पुरोदयात्तामुषसं सूर्य्यां मध्यन्दिने स्थिते ॥ ५८ ॥
वृषाकपायीं सूर्य्यास्तकाल आहुः स्तुतिष्वृचि* ।
तस्याश्रये सरण्यूश्च भगः पूषा वृषाकपिः ॥ ५९ ॥

---

* सूर्य्यस्य तामेवाहुस्तु निम्रुचि—इत्यपि पाठः ।

यमो वैश्वानरो विष्णुर्वरुणश्चैकपादजः ।
पृथिवी च समुद्राश्च देवाः सप्तर्षयश्च ये ॥ ६० ॥
आदिसाः केशिसाध्याश्च सविता वसुभिर्मनुः[१] ।
दध्यङ्ङथर्वा विश्वे च वाजिनो देवयोषितः ॥ ६१ ॥

*

असौ लोक, स्तृतीयश्च सवनं, साम रैवतम् ।
वैरूपश्चैव, वर्षाश्च शिशिरोऽथ ऋतुस्तथा ॥ ६२ ॥
त्रयस्त्रिंशश्च यः स्तोमः क्लृप्ता सप्तदशश्च यः ।
छन्दश्च जगतीनाम्ना तथातिच्छन्दसश्च याः ॥ ॥ ६३ ॥
पौरुषं चाहुरस्यैतत्सर्वमेव तु पौरुषम् ।
एतस्यैव तु विज्ञेया देवाः संस्तविकास्त्रयः ॥ ६४ ॥
चन्द्रमाश्चैव वायुश्च यश्च संवत्सरं विदुः ।
हरणं तु रसस्यैतत्कर्मणाऽमुत्र रश्मिभिः ॥ ६५ ॥
येन नातिविजानन्ति सर्वभूतानि चक्षुषा[२] ।
इत्थमग्नीन्द्रसूर्य्याणां भक्तयः समुदाहृताः ॥ ६६ ॥

---

१ आदित्यपूगः साध्याश्च सार्द्धश्च वसुभिर्मनुरिति पाठान्तरम् ।

२ येन नातिविजानन्ति सूर्य्यभूतानि चक्षुषा ।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा इति । पाठान्तरे

अग्नीन्द्रमरुतस्त्वष्टाऽश्विनौ देवावृतावृथौ ।
द्रविणोदा इमाः सप्त भवन्ति ऋतुदेवताः ॥ ६७ ॥
यो वायुरिन्द्रवायू यौ यौ मित्रावरुणावपि ।
यावश्विनौ य इन्द्रो ये विश्वेदेवाः सरस्वती ॥ ६८ ॥
प्रातःसवनिके शस्त्रे प्रउगे सप्त देवताः ।
भवन्ति ताः क्रमेणैता अनुवन्धाग्निरूपिताः ॥ ६९ ॥

## अग्नीन्द्रसूर्य्याणां नामभेदाः —

अग्नेस्तु पञ्च नामानि यानि सूर्य्यस्य वा नव ।
षड्विंशतिस्तथेन्द्रस्य क्रमाद्वक्ष्यामि तान्यपि ॥ ७० ॥

अग्निनामानि पञ्च

### १ अग्निः—सर्वे

जातो यदग्रे भूतानामग्रणीरध्वरे च यत् ।
अङ्गं संनयते तस्मात्स्तुतोऽग्निरिति सूरिभिः ॥ ७१ ॥

### २ द्रविणोदाः—कुत्सः

धनं बलं वा द्रविणं भायच्छद्येन कर्म्मणा ।
तत्कर्म दृष्ट्वा कुत्सस्तु प्राहैनं द्रविणोदसम् ॥ ७२ ॥

## ३ तनूनपात्—

अयं तनूनपादग्निः, असौ हि तननात्तनुः ।
ततस्तु मध्यमे जज्ञे स्थानेऽयं मध्यमात्ततः ॥ ७३ ॥
अनन्तरां प्रजामाहुर्न पादिति कृपण्यवः ।
नपादमुष्य चैवायमग्निस्तेन तनूनपात् ॥ ७४ ॥

## ४ नराशंसः—

पृथक्त्वेन समत्वेन यज्ञे यच्छस्यते नृभिः ।
स्तुवन्त्याशीषु तेनेमं नराशसं तु कारवः ॥ ७५ ॥

## ५ पवमानः—वैखानसाः

पुनाति यदिदं विश्वमेपोऽग्निः पार्थिवोऽप्सु सन् ।
वैखानसर्षिभिस्तेन पवमान इति स्तुतः ॥ ७६ ॥

———

इन्द्रनामानि षड्विंशतिः ।

## १ जातवेदाः—

भूतानि वेद यज्जातो, जातैर्यद्वाऽथ विद्यते ।
यद्वैष जातविद्योऽभूद्, वित्तं जातोऽधिवेत्ति वा ॥ ७७ ॥
विद्यते सर्वभूतेषु, यद्वा जातः पुनः पुनः ।
तेनैष मध्यभागिन्द्रो जातवेदा इति स्तुतः ॥ ७८ ॥

## २ वायुः—

अणिष्ठ एष यत्तु त्रीन् व्याप्यैको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्तः कर्मणा वायुमब्रुवन् ॥ ७९॥

## ३ वरुणः—

त्रीणीमान्यावृणोत्येको मूर्त्तेन तु रसेन यत् ।
तथैनं वरुणं शक्त्या स्तुतिष्वाहुः कृपरायनः ॥ ८० ।

## ४ रुद्रः—

अरोदीदन्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणाम् ।
चतुर्भिर्ऋषिभिस्तेन रुद्र इत्यभिसंस्तुतः ॥ ८१ ॥

## ५ इन्द्रः—

चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
ईष्टे चैवास्य सर्वस्य तेनेन्द्र इति स स्मृतः ॥ ८२ ॥
इरां दृणाति यत्काले मरुद्भिः सहितोऽम्बरे ।
रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥ ८३ ॥
रसान् रश्मिभिरादाय वायुनायं गतः सह ।
वर्षत्येष च यल्लोके तेनेन्द्र इति स स्मृतः (सूर्यः) ॥ ८४ ॥

## ६ पर्जन्यः—अत्रिः, और्वशः

यदिमां मार्जयत्येको रसेनाम्बरजेन गाम् ।
कालेऽत्रिरौर्वशश्चर्षी तेन पर्जन्यमाहतुः ॥ ८५ ॥
तर्पयत्येष यल्लोकान् जन्यो जनहितश्च यत् ।
परो जेता जनयिता यद्वाऽऽत्रेयस्ततो जगौ ॥ ८६ ॥

## ७ बृहस्पतिः—

बृहन्तौ पाति यल्लोकावेष द्वौ मध्यमोत्तमौ ।
बृहता कर्मणा तेन बृहस्पतिरितीडितः ॥ ७८ ॥

## ८ ब्रह्मणस्पतिः—शौनहोत्रः

ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्वमिदं जगत् ।
पातारं ब्रह्मणस्तेन शौनहोत्रः स्तुवञ्जगौ ॥ ८८ ॥

## ९ वाचस्पतिः—

वाचा वेदा ह्यधीयन्ते वाचा छन्दांसि तत्र ह ।
अथो वाक् सर्वमेवेदं तेन वाचस्पतिः स्तुतः ॥ ८९ ॥

## १० वास्तोष्पतिः—और्वशः

वास्तु मध्यच्छँल्लोकस्य मध्यमस्य तु पाति यत् ।
तेन वास्तोष्पतिं माह चतुर्भिरिममौर्वशः ॥ ९० ॥

## ११ क्षेत्रस्य पतिः—वामदेवः

क्षेमं[1] क्षितिभ्यो विदधद्यद्तुष्टविशत् क्षितौ[2] ।
तेनैनमाह क्षेत्रस्य वामदेवः स्तुवन् पतिम् ॥ ६१ ॥

## १२ ऋतम्—

मनसेमं तु यं दृश्यं मध्यमं लोकमाश्रितम् ।
शंसत् सत्येन सत्ये वै स एष स्तुतत्रानृतम् ॥ ६२ ॥

## १३ ऋतस्य श्लोकः—

रेत्रणान्नरसैः क्षिप्तैः स्थितो व्योम्न्येष मायया ।
ऋतस्य श्लोक इत्येष पुनश्चैनं ततोऽब्रवीत् ॥ ६३ ॥

## १४ अदितिः—गौतमः

न कुतश्चैष यद्दीनो वृत्वा तिष्ठति मध्यमः ।
राहूगण ऋषिस्तेन प्राहैनं गौतमोऽदितिम् ॥ ६४ ॥

---

१ अन्नमिति पाठान्तरम् ।

२ ददाति यदिमं क्षेत्रे त्वृतात्रम्नरजं पुनरित्यपि पाठः

## १५ कम्—

प्रजाभ्यस्त्वेष यच्छक्त एष वीरः शिवः सुखः ।
हिरण्यगर्भस्तेनैनमृषिरर्चन्नुवाच कम् ॥ ६५ ॥

## १६ यमः—

इह प्रजाः प्रयच्छन् स संगृहीता प्रयाति च ।
ऋषिर्विवस्वतः पुत्रं तेनाहैनं यमो यमम् ॥ ६६ ॥

## १७ मित्रः— विश्वामित्रः

मित्रीकृत्य जना विश्वे यदिमं पर्य्युपासते ।
मित्र इत्याह तेनैनं विश्वामित्रः स्तुवन् स्वयम् ॥ ६७ ॥

## १८ विश्वकर्म्मा—

निदाघमासातिगमे यद्देतनावति क्षितिम् ।
विश्वस्य जनयन् कर्म विश्वकर्मैष तेन सः ॥ ६८

## १९ सरस्वान्—

सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत् त्रिषु ।
सरस्वन्तमिति प्राह वाचं प्राहुः सरस्वतीम् ॥ ९९ ॥

## २० वेनः—भार्गवः

प्राणभूतस्तु भूतेषु यद्वितत्येह तिष्ठति * ।
तेनैनं वेनमाहर्षिर्वेनो नामेह भार्गवः ॥ १०० ॥

## २१ मन्युः—

ससृजे मासि मास्येनमभिमत्य ततो व्रजन् ।
तेनैनं मन्युरित्याह मन्युरेव तु तापसः ॥ १०१ ॥

## २२ असुनीतिः— श्रुतबन्धुः

यदन्तकाले भूतानामेक एव नयत्यसून् ।
तेनासुनीतिरुक्तोऽयं स्तुवता श्रुतबन्धुना ॥ १०२ ॥

---

* यद्वेनत्येषु तिष्ठतीति पाठान्तरम् ।

## २३ अपां नप्ता—गृत्समदः

निदाघमासातिगमे जन्म मध्ये भवत्यपाम् ।
नप्तारमाह तेनैनमृषिर्गृत्समदस्त्वपाम् ॥ १०३ ॥

## २४ दधिक्राः—

अपामम्बरगर्भौघमादधत्सोऽष्टमासिकम् ।
यत्क्रन्दत्यसकृन्मध्ये दधिक्रास्तेन कथ्यते ॥ १०४ ॥

## २५ धाता—

मासेन संभृतं गर्भं नवमेनाष्टमासिकम् ।
स्वयं क्रन्दन् दधात्युर्व्यां धातेत्यृग्भिः स गीयते ॥ १०५ ॥

## २६ तार्क्ष्यः—

स्तीर्णेऽन्तरिक्षे क्षियति यद्वा तूर्णं त्वरत्यसौ ।
अरिष्टनेमिस्तार्क्ष्यर्षिस्तार्क्ष्यं तेनैनमुक्तवान् ॥ १०६ ॥

सूर्य्यनामानि नव

## १ पुरूरवा:—

रुवन् व्योम्न्युदयं याति कृन्तन् भाद्भिस्तजन्नपः ।
पुरूरवसमाहैनं स्ववाक्येनोरुवासिनी ॥ १०७ ॥

## २ सविता—

संवर्तयँस्तमः सूर्य्यादुपसञ्च प्रवर्तयन् ।
दिवा चरन् प्रसौत्येकः सविता तेन कर्म्मणा ॥ १०८ ॥

## ३ भगः—वसिष्ठः

उदितोऽभासयल्लोकानिमांश्चैप स्वरश्मिभिः ।
स्वयं वसिष्ठस्तेनैनमृषिराह स्तुवन् भगम् ॥ १०९ ॥

## ४ पूषा—

उद्यन् जगत्पोपयति प्रणुदन् रश्मिभिस्तमः ।
तेनैनमस्तौत्पूषेति भरद्वाजस्तु पञ्चभिः ॥ ११० ॥

## ५ विश्वानरः—

संमत्यैकैकशस्त्वेनं यन्मन्यन्ते पृथङ्नराः ।
विश्वे विश्वानरस्तेन कर्मणा स्तुतिषु स्तुतः ॥ १११ ॥

## ६ मृत्युः—

यत्तु प्राच्यावयन्नेति घोषेण महता मृतम्( मृधे) ।
तेन मृत्युमिमं सत्रं स्तौति मृत्युरिति स्वयम् ॥ ११२ ॥
नाम्ना संकुसुको नाम यमपुत्रो जघन्यजः ।

## ७ वृषाकपिः—

वृषैष कपिलो भूत्वा यन्नाकमधिरोहति ॥ ११३ ॥
वृषाकपिरसौ तेन विश्वस्मादिन्द्र उत्तरः ।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ एव सः ॥ ११४ ॥
सायाह्नकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपिरितो वा स्यादिति मन्त्रेषु दृश्यते ॥ ११५ ॥

## ८ केशी—

कृत्वा सार्यं पृथग्याति भूतेभ्यस्तमसोऽक्षये ।
प्रकाशं किरणैः कुर्वन् तेनैनं केशिनं विदुः ॥ ११६ ॥

## ६ त्रिविक्रमः—मेधातिथिः

त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा ।
तेन मेधातिथिः प्राह विष्णुमेनं त्रिविक्रमम् ॥ ११७ ॥

## विष्णुः—

विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मणः ।
विष्णुर्निरुच्यते वातः सर्वः सर्वान्तरश्च सः ॥ ११८ ॥

पञ्च षड्विंशतिस्तद्वन्नव नामानि यानि च ।
इत्थमग्नीन्द्रसूर्याणां तान्युक्तानि यथाक्रमम् ॥ ११९ ॥
दैवतोपपरीक्षेयं शौनकोक्ता प्रदर्शिता ।
प्रमाणं तस्य याथार्थ्ये भगवान् वेदपूरुषः ॥ १२० ॥

## इति बृहद्देवतावर्गः १०

वर्गा इमे दैवादिव्यनरधर्म्मक्रियान्ययैः ।
नैगमद्वयनानार्थैर्बृहद्देवतयापि च ॥ १ ॥
एतैस्तु दशभिर्वर्गैर्निघण्टूक्ता यथायथम् ।
गृहीताः श्लोकबन्धेन शब्दाः प्रायेण वैदिकाः ॥ २ ॥
इतीत्थं माधुसूदन्या सरस्वत्या प्रसन्नया ।
समीक्षाचक्रवर्तिन्या मणिमाला प्रवर्तिता ॥ ३ ॥
सन्ति यद्यपि भूयांसः शब्दा अन्येऽपि वैदिकाः ।
तथापीह निघण्टूक्ताः सर्वे तावत्प्रदर्शिताः ॥ ४ ॥
तेन मे भगवान् वेदपुरुषः परमेश्वरः ।
प्रसीदतु सदेत्येवमाशासे मधुसूदनः ॥ ५ ॥

मिथिलापश्चिमभागे
श्रीक्षेत्रस्यातिसन्निधौ पुण्ये ।
यो गाढासंस्थाने-
ऽलभत श्रीवैद्यनाथतो जन्म ॥ ६ ॥

भारतपाश्चिमभागे
पुष्करतीर्थातिसन्निधौ पुण्ये ।

जयपुरराजद्वारे-
ऽलभत महीपालतोऽभ्यर्हाम् ॥ ७ ॥

वयसः पश्चिमभागे
वेदमहातीर्थसन्निधौ पुण्ये ।
कृतधीः श्रीमधुसूदन-
शर्म्मा सोऽकृत सरस्वतीमालाम् ॥ ८ ॥

मालापश्चिमभागे
विद्यातीर्थातिसन्निधौ पुण्ये ।
मनसो योगं कुर्वन्
सुखतः सर्वं लभेत वेदार्थम् ॥ ९ ॥

## इति सरस्वतीमणिमालाख्यो वैदिकशब्दकोशः

श्रीरस्तु

शुभमस्तु

श्रीः

## अकारादि वर्णानुक्रमेणानुक्रमणिका।

| [illegible] | पृष्ठ श्लो० | [illegible] | पृष्ठ श्लो० |
|---|---|---|---|
| [illegible] | ३७ । ३३ | सचति | २२ । ७ |
| श्वेतया | ८ । १ | सचते | ५२ । ४ |
| व्यःकृति | २१ । ६ | सचा | ३८ । ४० |
| संयत् | १६ । ३३ | सत् | ६ । २२ |
| संयुगे | १६ । ३३ | सतः | ५२ । ९ |
| संहृतः | १६ । ३३ | सतीनम् | ६ । २५ |
| सच्चीत | २२ । २ | सत्यम् | ६ । २६ |
| समरः | ७ । ८ | सत्रा | १७ । १७ |
| सङ्काः | १६ । ३३ | सदनम् | ६ । २३ |
| सङ्कल्ये | १६ । ३३ | सदसी | ६ । १ |
| सङ्ग्राये | १६ । ३३ | सद्मनी | ६ । २ |
| सङ्गमे | १६ । ३३ | सदान्वे | ४८ । २४ |
| सङ्गे | १६ । ३३ | सद्म | ६ । २६ |

शुभम्

इति ।

# शुद्धिपत्रम् ।

| शुद्धम् | अशुद्धम् | पृष्ठे | पङ्क्तौ । |
|---|---|---|---|
| सिन्धुः | सिन्धु | ४ | १२ |
| ऋतस्ययोनिः | ऋतस्य योनिः | १० | ३ |
| ऋतु | ऋतु | १६ | ७ |
| वेकुरा | वेकुरो | १७ | ६ |
| वाचो | वचो | १७ | १० |
| स्तवस्तरः | स्तनस्तरः | १८ | ५ |
| सचति | चसति | २२ | १५ |
| विद्रधे | विद्रधे | ३० | ३ |
| सोमो अचाः | सामोऽचाः | ३० | १४ |
| पड्भिः | वड्भिः | ३१ | १ |
| पदि | पदिः | ३१ | ८ |

| शुद्धम् | अशुद्धम् | पृष्ठे | पङ्क्तौ । |
|---|---|---|---|
| रश्मिन्वती | रि सन्वति | ३२ | १ |
| वृन्दं | वृंदं | ३२ | १६ |
| वुन्दो | व्रुन्दो | ३२ | १६ |
| नृच | नृ च | ३६ | ४ |
| निर्दंशे | निर्द्दंशे | ४१ | २ |
| अयर्यंत्रो | अयेर्य्यंत्रो | ४१ | ६ |
| मत्त्वात्तु | मत्त्वा तु | ४२ | १५ |
| मृतानि | मूनीनि | ४३ | १६ |
| स्याद् | स्यदि | ४४ | १७ |
| ये नाशयन्ति | येनाशयन्ति | ४६ | ३ |
| वाद्धुंपिका | वादृधुंपिका | ४६ | १३ |
| मनाश्रितः | समाश्रितः | ४७ | १६ |
| स्याद् | स्यद् | ४८ | २ |

| शुद्धम् | अशुद्धम् | पृष्ठे | पङ्क्तौ । |
|---|---|---|---|
| गम्भीर | भारमु- | ५६ | ११ |
| गम्भीरो | गम्भीरा | ५६ | ११ |
| हरितो | हीरतो | ६२ | १५ |
| दकयो | दे कयो | ६२ | १७ |
| वध्रेगत्यां | वध्रेगत्यां | ६३ | ७ |
| वनुष्यति | वनुष्यति | ६३ | १४ |
| याथार्थ्यं | यथार्थ्यं | ६४ | २ |
| विभागेन | विभागन | ६५ | १६ |
| नराशंसं | नरागसं | ७५ | ६ |
| जनहितं च | जनह्रितंश्च | ७७ | ११ |
| हिरण्यगर्भः | हिरण्यगभः | ८० | २ |

द्वितीयपृष्ठे सप्तमश्लोकानन्तरं पञ्चमपृष्ठीयद्वात्रिंशत्तमः, षष्ठपृष्ठीयत्रयस्त्रिंशत्तमः श्लोकश्च संनिवेश्यौ । तदनन्तरः मधस्ताच्च, इतित्रिलोकीस्था देवताः ॥' इत्येतावान् पाठः संनिवेश्यः ।

सप्तमपृष्ठे दिग्वाचकशब्दाः किरणवाचकशब्देभ्यःपूर्वं पाठ्याः ॥

---

